चयंसआप्यभीमसेनजः ॥ ययौचमाद्रिनंदनंसचाययौस्वकंपुरं ॥ २२० ॥ नकुलःपश्चिमाशायांविजिग्ये
खिलभूभृतः ॥ करमापचवीरोसौसौहार्दादेवमातुलात् ॥ आययौचमहारत्नसंचयेनस्वकंपुरं ॥२२१॥ अ
र्जुनःकपिवरोच्छ्रितध्वजंस्यंदनंसमधिरुह्यगांडिवी ॥ यातएवदिशमुत्तरांतदापार्वतेयकनृपाःसमाययुः २२२
त्रैगर्ताःपार्वतेयाश्चसहिताःपांडुनंदनं॥अभ्येत्ययोधयामासुर्जानंतस्तच्चिकीर्षितं॥२२३॥तान्विजित्ययुगप
त्सपांडवःसंजयन्क्रमशएवतांदिशं॥प्राव्रजच्चभगदत्तमूर्जितंतेनचास्यसमभून्महारणः॥२२४॥सोभियुध्यस
गजोदिनाष्टकंश्रांतआहपुरुहूतनंदनं॥ब्रूहितेसमरकारणंत्वितिप्राहदेहिकरमित्यथार्जुनः॥२२५॥सोप्यदा
त्करममुष्यवासवोमद्गुरुस्तवपितेतिसादरं॥नैवजेतुमिहशक्ष्यसित्वमित्यावदद्धरिवरास्त्रतेजसा॥२२६॥स्नेह
पूर्वंप्रदत्तेतुकरेनैवाहचोत्तरं॥अर्जुनोव्यर्थकलहमनिच्छन्स्नेहयंत्रितः।२२७। पार्थोजित्वाष्टवर्षाणिषट्द्वीपान
परानपि॥अजयच्चतुर्दिशमपिसर्वशस्त्रास्त्रतेजसा॥२२८॥पातालसप्तकंगत्वाजित्वादैतेयदानवान्॥ बलेश्च
विष्णुवचनात्करंजग्राहसामतः॥२२९॥ जित्वाचवासुकिंभूरिरत्नमादायसत्वरः॥ आजगामपुरंस्वीयंवीरो ॥१०७३॥
वत्सरमात्रतः ॥२३०॥ सुवर्णरत्नगिरयश्चतुर्भिस्तैःसमार्जिताः ॥ चत्वारोयोजनानांहिदशत्रिंशच्छतंतथा

॥२३१॥चतुःशतंचक्रमशउच्छ्रिता दिग्जयार्जिताः॥प्रतीच्याद्यपसव्येनक्रमाद्दिग्भ्यःसमार्जिताः॥२३२॥वि
श्वकर्मकृतत्वात्तुपुरस्याल्पेपिचस्थले ॥ अंतर्गतास्तेगिरयस्तदद्भुतमिवाभवत् ॥२३३॥ततोयज्ञःप्रववृतेकृष्ण
द्वैपायनेरितः॥ऋत्विजोमुनयोत्रासन्सर्वेविद्यासुनिष्ठिताः॥२३४॥द्वैपायनोक्तविधिनादीक्षितंचक्रिरेनृपं ॥
ज्येष्ठत्वाद्याजमान्यंतुप्रणिधाययुधिष्ठिरे॥२३५॥भीमार्जुनादयःसर्वेसहतेनसमासिरे ॥ ब्रह्माणीपदयोग्यत्वा
त्कृष्णैकायज्ञपत्न्यभूत्॥२३६॥पदायोग्यतयानान्याःपत्न्यस्तेषांसहासिरे ॥ आज्ञयैवजगद्धातुर्व्यासस्यानंतते
जसः॥२३७॥ स्थलमप्यत्रसर्वंहिरत्नहेममयंत्वभूत् ॥ किमुपात्रादिकंसर्वंशिबिराणिचसर्वशः ॥ २३८ ॥आ
हूतंदिग्जयेपार्थैस्तदालोकद्विसप्तकं ॥ सर्वमत्रागमद्ब्रह्मशर्वशक्रादिपूर्वकं ॥२३९॥ भीष्मोद्रोणश्चविदुरोधृ
तराष्ट्रःसहात्मजः ॥ सस्त्रीकाआययुस्तत्रबाह्लीकश्चसहात्मजः ॥ २४० ॥ तथैवयादवाःसर्वेबलभद्रपुरोग
माः ॥ रुक्मिणीसत्यभामाद्यामहिष्यःकेशवस्यच ॥ २४१ ॥ तत्रसर्वजगदेकसंगमेतत्त्वनिर्णयकथाबभूवि
रे ॥ प्राश्निकोत्रपरिपूर्णचिद्घनोव्यासएवभगवान्बभूवह ॥२४२॥ तत्त्वनिर्णयकथासुनिर्णयोवासुदेवगुणवि
स्तरोभवत् ॥ नास्तितत्सदृशउत्तमःकुतःपारएषनततोन्यइत्यपि ॥२४३॥ बादरायणभृगूत्थरामयोःशृण्व

तोःपरमनिर्णयेकृते ॥ मोदमानजनतासमागमेऽपृच्छदत्रनृपतिर्यतव्रतं ॥ २४४ ॥ जानमानोपिनृपतिःकृ
ष्णंपूज्यतमंहरिं ॥ संशयंभूभृतांभेत्तुंभीष्मंपप्रच्छधर्मवित् ॥ २४५ ॥ नास्तिनारायणसममितिवादेननिर्ण
ये ॥ कृतेब्रह्मादिभिरपिकृष्णंमर्त्यंहिमेनिरे ॥ २४६ ॥ नृपास्तस्मादयंकृष्णोनारायणइतिस्मह ॥ सम्यग्ज्ञाप
यितुंधर्मसूनुर्भीष्ममपृच्छत ॥ २४७ ॥ ब्रह्मादयःसुरायस्माद्दृश्यंतेमर्त्यवन्नृभिः ॥ नचैवातितराभ्यासोनृणा
मस्तिमुनिष्वपि ॥ २४८ ॥ सर्वशास्त्रविदंभीष्मंजानंत्येतेनृपाअपि ॥ तस्माद्भीष्ममपृच्छत्सकुलवृद्धत्वतस्त
था ॥ २४९ ॥ पितामहाग्रपूजार्हःकोत्रलोकसमागमे ॥ ब्रह्मशर्वादयश्चात्रसंतिराजानएवच ॥ २५० ॥ इ
तिपृष्टोब्रवीद्भीष्मःकृष्णंपूज्यतमंप्रभुं ॥ २५१ ॥ यद्यप्येकस्त्रिधाविष्णुर्वसिष्ठभृगुवृष्णिषु ॥ प्रादुर्भूतस्तथाप्ये
तेनृपाहिव्यासरामयोः ॥ विप्रत्वान्नविरुध्यंतेततएवचयुक्ततां ॥२५२॥ मन्यंतेनविरोधश्चतेषांतत्रहितादृ
शः ॥ २५३ ॥ अविवादेप्रसिद्धिश्चनैवास्यभविताक्वचित् ॥ तस्मात्कृष्णायदातव्यमितिभीष्मेणचिंतितं
॥२५४॥ कृष्णायदत्तेराजानोविवादंकुर्युरंजसा ॥ विवादेनचकीर्तिःस्याद्वासुदेवस्यविस्तृता ॥ ततःकृष्णा
याग्रपूजादत्तापार्थैर्जगत्पुरः ॥२५५॥ व्यासभार्गवयोःसाक्षात्तदैक्यात्तदनंतरं ॥ अर्घ्यांपूजांददुश्चान्यान्य

थायोग्यमपूजयन् ॥ २५६॥ अग्र्योपहारउपयापितएवकृष्णेकोपादनिंददमुमाशुचचेदिराजः ॥ श्रुत्वैवत
त्पवनजोभिययौनृपंतंहंतुंजगद्गुरुविनिंदकमृद्धमन्युः ॥२५७॥ दूरेपिकेशवविनिंदनकारिजिह्वामुच्छेत्स्यइ
त्युरुतरास्यसदाप्रतिज्ञा ॥ भीमस्यतंतुजगृहेसरिदात्मजोथसंप्रोच्यकेशववचोनिजयोर्वधाय ॥२५८॥ मयै
ववध्याविततावाह्वयत्केशवःपुरा ॥ तच्छ्रुत्वाभीमसेनोपिस्थितोभीष्मकरग्रहात् ॥२५९॥ जानन्नपिहरेरि
ष्टंस्वकर्तव्यतयोत्थितः ॥ भीमएतावदुचितमितिमत्वास्थितःपुनः ॥२६०॥ देवसंघभविनांमहानभूद्वीक्ष्य
तोषइहकेशवेधिकां ॥ अर्चनांयइहमानुषोजनोमध्यएवसतुसंस्थितोभवत् ॥२६१॥ आसुराइहसुयोधनाद
यस्तत्रतेविमनसोबभूविरे ॥ दुर्वचोभिरधिकंचचेदिपःकृष्णमार्च्छंदुरुसद्गुणार्णवं ॥२६२॥ समाह्वयचकेशवं
युधेतमाशुकेशवः ॥ निवार्यतस्यसायकाञ्जघानचारिणाप्रभुः ॥२६३॥ निकृत्तमानकंधरःसभक्तिमानभूद्ध
रौ ॥ तमाश्रितश्चयोसुरोमहातमःप्रपेदिवान् ॥ २६४ ॥ जयःप्रविश्यकेशवंपुनश्चपार्षदोभवत् ॥ असौचपां
डवैःक्रतुःप्रवर्तितोयथोदितः ॥२६५॥ सुवर्णरत्नभारकान्बहून्नृपाउपानयन् ॥ उपायनेसुयोधनंनृपोदिश
द्गृहेस्यच॥२६६॥अभोजयंस्तथाद्विजान्यथेष्टभक्ष्यभोज्यकैः ॥ सुवर्णरत्नभारकान्बहूंश्चदक्षिणाददुः ॥२६७॥

यदिष्टमासयस्यचप्रदत्तमेवपांडवैः ॥ समस्तमत्रसर्वशोथसस्तुरुद्धतामुदा ॥ २६८ ॥ नदत्सुरोरुदुंदुभिप्रगी
तदेवगायकाः ॥ प्रनृत्तदिव्ययोषितःसुरापगांव्यगाहयन् ॥२६९॥ समस्तराजसंयुताविगाह्यजाह्नवीजले॥
पुरंययुःपुनश्चतेस्वसद्मचागमन्सुराः ॥ २७० ॥ गतेषुसर्वराजसुस्वकंपुरंस्वकेषुच ॥ सभीष्मकेषुसर्वशःसहां
विकेयकेषुच ॥ २७१ ॥ विचित्ररत्नकारितेरविप्रभेसभातले ॥ सकेशवोवरासनेविवेशधर्मनंदनः ॥२७२॥
तथैवरुक्मिणीमुखाःपरिग्रहारमेशितुः ॥ तथैवभीमफल्गुनावुपाविशन्हरेरुप ॥२७३॥ सहैववायुसूनुनात
थैवपार्षतात्मजा ॥ उपैवरुक्मिणींशुभांतथैवसत्यभामिनीं ॥ २७४ ॥ यमौचपार्षतादयोधनंजयांतिकेऽवि
शन् ॥ तथैवरामसात्यकीसमीपएवभूभृतः ॥२७५॥ समासतांचसासभाव्यरोचताधिकंतथा॥ यथासभास्व
यंभुवःसमास्थिताचविष्णुना ॥ २७६ ॥ विचित्रहेममालिनःशुभांबराश्चतेधिकं ॥ स्फुरत्किरीटकुंडलाविरे
जुरत्रतेनृपाः ॥ २७७ ॥ विशेषतोजनार्दनःसभार्यकोजगत्प्रभुः ॥ यथादिवौकसांसदस्यनंतसद्गुणार्णवः
॥ २७८ ॥ उपासिरेचतंनृपाःसमस्तशःसुहृद्गणाः ॥ तदाजगामखड्गभृत्सुयोधनःसहानुजः ॥ २७९ ॥ 
द्वारंसभायाहरिनीलरश्मिव्यूढंत्वजानन्सविहायभित्तिं॥ अभ्यंतराणांदृशिनोविघातिनींसंस्फाटिकामाशु

दृढंचुचुंबे ॥२८०॥ प्रावेशयेतांचयमौतमाशुसभांभुजौगृह्यनृपोपदिष्टौ ॥ तत्रोपविश्यक्षणमन्यतोगादम्
ष्यमाणःश्रियमेषुदिव्यां ॥२८१॥ तत्रेंद्रनीलभुविरत्नमयानिदृष्ट्वापद्मानिनीरमनसाजगृहेस्ववस्त्रं ॥ रत्नोरु
दीधितिनिगूढजलंस्थलंचमत्वापपातसहितोऽवरजैर्जलौघे ॥ २८२॥ तंप्राहसद्भगवताक्षितिभारनाशहेतोः
सुसूचितउरुस्वरतोत्रभीमः ॥ पांचालराजसुतयाचसमंतथान्यैःस्वीयैस्तथानुजहसुर्भगवन्महिष्यः ॥२८३॥
मंदस्मितेनकिलसद्वदनेंदुबिंबोनारायणस्तुमुखमीक्ष्यमरुत्सुतस्य ॥ नोवाचकिंचिदथधर्मसुतोनिवार्यप्रा
स्थापयद्वसनमाल्यविलेपनानि ॥ २८४ ॥ कृष्णावृकोदरगतंबहुलंनिधायक्रोधंययौसशकुनिर्धृतराष्ट्रसू
नुः ॥ सुव्रीडितोनृपतिदत्तवरांबरादीन्व्यक्तृत्यमार्गगतआहसमातुलंस्वं ॥ २८५ ॥ यौमामसहतांकृष्णाभी
मौकृष्णस्यसन्निधौ ॥ तयोरकृत्वासंतापंनाहंजीवितुमुत्सहे॥२८६॥ यदिमेशक्तिरत्रस्याद्धातयेयंवृकोदरं॥
अग्रपूजांचकृष्णस्यविलुंपेयंनसंशयः ॥ २८७॥ ईदृशंपांडवैश्वर्यंदृष्ट्वाकोनामजीवितुं ॥ इच्छेतकरदायेषां
वैश्यवत्सर्वभूमिपाः ॥२८८॥ इत्युक्तःशकुनिर्वैरंदृढीकर्तुंवचोब्रवीत् ॥ किंतेवैरेणराजेंद्रभातृभिर्बलिभिःपु
नः॥२८९॥अनुजीवस्वतान्वीरान्गुणज्येष्ठान्बलाधिकान्॥ इतीरितोतिसंवृद्धकोपआहसुयोधनः ॥२९०॥

यदितेषांतदैश्वर्यंनमांगच्छेदशेषतः ॥ सर्वथानैवजीवेयमितिसत्यंब्रवीमिते ॥२९१॥ नतुबाहुबलाच्छक्य
मादातुंतांश्रियंक्वचित् ॥ नेंद्रोपिसमरेशक्तस्तांजेतुंकिमुमानुषाः ॥ २९२ ॥ इतीरितःपापतमआहगांधार
कोनृपः ॥ पापानामखिलानांचप्रधानंचक्रवर्तिनां ॥ २९३ ॥ यांयांश्रियंप्रदीप्तांत्वंपांडवेषुप्रपश्यसि ॥ ताम
क्लेशतआदास्येक्रीडन्नक्षैस्त्वदंतिके ॥२९४॥ इतीरितःप्रसन्नधीःसुयोधनोबभूवह ॥ प्रजग्मतुश्चतावुभौवि
चित्रवीर्यजंनृपं ॥२९५॥ धृतराष्ट्रमथोवाचद्वापरांशोतिपापकृत् ॥ नास्तिक्यरूपःशकुनिर्विवर्णंहरिणंकृशं
॥ २९६ ॥ दुर्योधनंचतच्छ्रुत्वाकुतइत्याहदुर्मनाः ॥ अब्रूतांतौनृपायाशुद्वाभ्यांयन्मंत्रितंपथि ॥२९७॥ श्रु
त्वैवतन्नेत्यवदत्सभूपतिर्विरोधिधर्मस्यविनाशकारणं ॥ कुमंत्रितंवोनममैतदिष्टंस्वबाहुवीर्यात्क्षमहाश्रियोहि
ते ॥ २९८॥ त्वयापिनिर्जित्यदिशोमखाग्र्याःकार्याःस्पृधोमागुणवत्तमैस्तैः ॥ विशेषतोभ्रातृभिरग्र्यपौरुषै
रित्युक्तआहाशुसुयोधनस्तं ॥ २९९॥ यदिश्रियंपांडवानांनाक्षैराहर्तुमिच्छसि ॥ मृतमेवाद्यमांविद्धिपांड
वैस्त्वंसुखीभव ॥ ३०० ॥ यदिमज्जीवनार्थीत्वमानयाश्विहपांडवान् ॥ सभायांदेवनायैवनचाधर्मोत्रकश्च
न ॥ ३०१ ॥ वेदानुजीविनोविप्राःक्षत्रियाःशस्त्रजीविनः ॥ त्रुट्यतेयेनशत्रुश्चतच्छस्त्रंनैवचेतरत् ॥३०२॥

अतःस्वधर्मएवायंतवापिस्यात्फलंमहत् ॥ इत्युक्तोमाफलंमेस्तुतवैवास्त्वितिसोब्रवीत् ॥ ३०३ ॥ एवंब्रुवन्न
पिनृपआविष्टःकलिनास्वयं ॥ पुत्रस्नेहाच्चविदुरमादिशत्पांडवान्प्रति ॥ ३०४ ॥ आविवेशकलिस्तंहियदा
पुत्रत्वसिद्धये ॥ अंशेनततआरभ्यनैवास्मादपजग्मिवान् ॥३०५॥ यावत्पुरंपरित्यज्यवनमेवविवेशह ॥
तदंतराततस्तस्यपापयुक्तंमनोभवत् ॥ ३०६ ॥ न्यवारयत्तंविदुरोमहामतिःपापंकुलस्यापिविनाशकोयं ॥
समुद्यमोनात्रविचार्यमस्तिकुथानतस्मादयशश्चतेस्यात् ॥३०७॥ इतिब्रुवाणंकलहोत्रनस्यान्निवारयामोवय
मेवयस्मात् ॥ द्रष्टुंसुतान्क्रीडतएकसंस्थानिच्छामिपार्थांश्चसुयोधनादीन् ॥३०८॥ अतःक्षिप्रमुपानेयाःपार्था
इतिबलोदितः ॥ ययौसविदुरःपार्थान्द्वारकांकेशवेगते ॥३०९॥ गतेहिपार्थसन्निधेःसुयोधनेथनारदः ॥
शशंसधर्मसूनुनाप्रचोदितोरिमागतं ॥ ३१० ॥ कउद्यमीनृपेष्वितिप्रपृष्टआहनारदः ॥ ससौभराड्वरंशिवा
द्वापवृष्णिनिर्जयं ॥३११॥ पांसुमुष्टिंसकृद्ग्रासीबहूनब्दांस्तपश्चरन् ॥ आजगामहरादाप्यवरंकृष्णजयेपु
नः ॥ ३१२ ॥ सश्रुत्वामागधवधंदिशांविजयमेवच ॥ राजसूयक्रतुंचैवशिशुपालवधंतथा ॥ ३१३ ॥ यदू
न्प्रत्युद्यमंतूर्णंकरोतीतिनिशम्यतत् ॥ समैक्षद्धर्मजःकृष्णमुखशीतांशुमंडलं ॥ ३१४ ॥ अस्त्वित्युक्त्वास

गोविंदःप्रेषयामासयादवान् ॥ प्रद्युम्नादीन्दिनैःकैश्चित्स्वयंचागात्सहाग्रजः ॥३१५॥ विदुरस्तुततोगत्वा
धर्मराजमथाह्वयत् ॥ भ्रातृभिर्वार्यमाणोपिकृष्णयाचसधर्मराट् ॥३१६॥ सार्धंमात्राभ्रातृभिश्चकृष्णयाचय
यौद्रुतं ॥३१७॥ ज्येष्ठाज्ञयैवविदुरआह्वयन्नपिधर्मजं ॥ नागंतव्यमितिप्राहदोषानुक्त्वाक्षजान्बहून् ॥३१८॥
इतीहदोषसंचयस्तथापितेपितुर्वचः ॥ समीक्ष्यतद्वयंस्वयंकुरुष्वकार्यमात्मनः ॥३१९॥ इतीरितोपिपांडवो
ययौकलिप्रवेशतः ॥ विचित्रवीर्यजंनृपंसमासदत्ससैनिकः ॥ ३२० ॥ कल्यावेशान्नृपतिःप्रतिजज्ञेपूर्वमेव
धर्मात्मा ॥ आहूतोद्यूतकरणान्निवर्तेयंनैववारितोपीति ॥३२१॥ तेनायात्ससुहृद्भिर्निवार्यमाणोपिनागपुर
माशु ॥ नहिधर्मोद्यूतकृतोविशेषतःक्षत्रियस्यलोकगुरोः ॥३२२॥ वैचित्रवीर्यतनयेनतुपांडुपुत्राःसंभावि
तास्तमुपचन्यवसन्निशायां ॥ प्रातस्तुभीष्ममुखराःसकलाश्चभूपाआसेदुराशुचसभांसहपांडुपुत्रैः ॥३२३॥
वैचित्रवीर्यनृपतिर्विदुरान्वितोस्यगांधारराजसहितास्तनयाःसकर्णाः ॥ प्राप्ताःसभातलमथाह्वयदत्रधर्मरा
जंसुतःसुबलकस्यसदेवनाय॥३२४॥सर्वांश्चतत्रकलिराविशदेवभीमपूर्वान्विनैवचतुरःसपृथांचकृष्णां ॥ क्ष ॥१०७७॥
त्तारमेवचततोनहिभीष्ममुख्यैस्तेवारिताःकुलविनाशनकर्मवृत्ताः ॥३२५॥ भीमादिभिःसविदुरेणचवार्य

माणोद्यूतेनिधायपणमप्यखिलंस्ववित्तं ॥ गांधारकेणविदिताक्षहृदाजितोद्राक्पांडोःसुतोथनकुलंन्यदधात्प
णाय ॥३२६॥ तस्मिञ्जितेथसहदेवमथार्जुनंचभीमंचसोमकसुतांस्वमपिक्रमेण॥राजानिधायविजितोऽथसु
योधनःस्वंसूतंदिदेशपृषतात्मजपुत्रिकायाः॥३२७॥ सूतोगत्वातदंतंसमकथयदिमांद्यूतमध्येजितासिक्षिप्रं
चायाहिराज्ञांसमितिमुरुतरामित्यथोसाप्यवादीत् ॥ नाहंयास्येगुरूणांसमितिमितिययौसोप्यमुंभीमभीतं
ज्ञात्वादुःशासनंसोप्यदिशदथनृपोधार्तराष्ट्रोनुजंस्वं ॥३२८॥ सपापपूरुषोत्तमःप्रगृह्यकेशपक्षके॥पुरःस्वमा
तुरानयत्सभामयुग्मवाससीं ॥३२९॥ समाहृतारजस्वलाजगादभीष्मपूर्वकान् ॥ अधर्मएषवार्यतेनधर्मि
भिर्भवद्विधैः ॥३३०॥ कथंछलात्मकेद्यूतेजितेधर्मजयोभवेत्॥नहिद्यूतंधर्म्यमाहुर्विशेषेणचभूभुजां ॥३३१॥
येधर्मंनवदंतीहनतेवृद्धाइतीरिताः ॥ अवृद्धमंडितांनैवसभेत्याहुर्मनीषिणः ॥३३२॥ कथंद्यूतेजिताचाहम
जितेस्वपतौस्थिते ॥ समानधर्मिणीमाहुर्भार्यांयस्माद्विपश्चितः ॥३३३॥ सहैवकर्मकर्तव्यंपतौदासेहिभार्य
या ॥ दासीत्वंमेपृथङ्नस्याज्जितेपिहिपतौततः ॥ ३३४ ॥ इत्युक्ताअपिभीष्माद्याःकल्यावेशेनमोहिताः ॥
पृच्छधर्मजमित्युक्त्वातूष्णीमेवबभूविरे ॥ ३३५ ॥ दुर्योधनप्रतीपंहिनकश्चिदशकत्तदा ॥ उवाचविदुरस्त

त्रनधर्मोयमितिस्फुटं ॥३३६॥ नतस्यवाक्यंजग्राहधृतराष्ट्रःसहात्मजः ॥ ऊर्ध्वबाहुःसचुक्रोशदेवानाख्या
पयंस्तदा ॥ ३३७ ॥ स्वाशक्तिंद्रौपदींचाहजितानैवासिधर्मतः ॥ अधर्मोहिमहानेतांसभामाक्रम्यतिष्ठति
॥ ३३८॥ एवंतुविदुरेणोक्तेविकर्णःपापकोपिसन् ॥ आहडंभार्थमेवात्रधर्मवित्त्वंप्रकाशयन् ॥३३९॥ अ
धर्मएवायमितिकर्णोथैनमभर्त्सयत् ॥३४०॥ दृष्ट्वाभीमःक्लिश्यमानांचकृष्णांधर्मात्ययंधर्मराजेचदृष्ट्वा ॥ रा
जाशास्योयुवराजेनधर्माच्चलन्यस्माद्वाक्यमिदंबभाषे ॥ ३४१ ॥ इमांन्यस्तवतोद्यूतेधक्ष्णीयौहितेभुजौ ॥
नैवमित्यर्जुनोवादीत्तमाहाथवृकोदरः ॥३४२॥ वक्तव्यंनतुकर्तव्यंतस्मान्नहिमयाकृतं ॥ उत्तमेवचसाशिक्षा
मध्यमेर्थापहारणं ॥३४३॥ अधमेदेहदंडश्चतस्माद्वाच्योयुधिष्ठिरः ॥ अथकर्णोब्रवीत्कृष्णामपतिर्ह्यसिशो
भने॥३४४॥धार्तराष्ट्रगृहंयाहीत्यथदुर्योधनोवदत्॥परस्परविरोधार्थंपांडवानामिदंवचः॥३४५॥युधिष्ठिरोदुः
खहेतुस्तवैकोयद्येनमन्येनगुरुर्नएषः॥इतिब्रूयुरथवाभीमपार्थावेकोपिवाभीमइहोत्सृजेत्वां ॥३४६॥ इत्युक्तऊ
चेपवमानसूनुःपूज्योस्माकंधर्मजःसंशयोन॥ गुरुश्चाहंवोखिलानांयतोहिबलज्येष्ठंक्षत्रमाहुर्महांतः॥३४७॥ ॥१०७८॥
बलज्यैष्ठ्येयदिवःसंशयःस्यादुत्तिष्ठध्वंसर्वएवाद्यवीराः ॥ मृद्नामिवःपादतलेनसर्वान्सहानुबंधान्यश्चमांयोद्धु

कामः ॥३४८॥ इतिब्रुवन्समुत्थितोनदन्वृकोदरोयदा ॥ विघूर्णितासभाखिलाभयान्नचाहकिंचन ॥३४९॥
भीष्मोद्रोणोविदुराद्याःक्षमस्वसर्वंत्वयोक्तंसत्यमित्येवहस्तौ॥गृहीत्वैनंस्थापयामासुरस्मिंस्थितेशांतिंचापिरे
धार्तराष्ट्राः ॥३५०॥निवारितोधर्मजेनगुरुभिश्चापरैस्तदा॥माननार्थंगुरूणांतुभीमस्तान्नजघानह ॥३५१॥
नैवात्यवर्ततज्येष्ठंधर्मात्मानंयुधिष्ठिरं ॥ तेषांपापाभिवृद्ध्यर्थंज्येष्ठवृत्तिंचदर्शयन् ॥ ३५२॥ अथदुर्योधनःपा
पोभीमसेनस्यपश्यतः ॥ ऊरुंसंदर्शयामासकृष्णायैभीमआहतं ॥ ३५३ ॥ तवोरुमेनंगदयोरुवेगयाविभे
त्स्यइत्येवपुनःसुयोधनः ॥ ऊचेनान्यद्धवतामस्तिवित्तंद्यूतेकृष्णंस्थापयध्वंपणाय ॥३५४॥ अथाब्रवीद्वृको
दरःकृतेवमाननेहरेः ॥ निपात्यभूतलेहितेशिरोस्पृदिष्यइत्यलं ॥३५५॥ सवध्यएवमेसदापरोक्षतोपियोह
रिं ॥ विनिंदयेदितिध्रुवंप्रतिश्रुतंहिमारुतेः ॥ ३५६ ॥ पुनश्चपापवृद्धयेतदैवनोजघानतं ॥ विकर्तनात्म
जःपुनर्जगादसोमकात्मजां ॥ ३५७ ॥ प्रयाहिभूभृतोहिनोगृहंनसंतिपांडवाः ॥ इतीरितेसमुत्थितोवृको
दरोनुचार्जुनः ॥३५८॥ उभौचतौयुधिष्ठिरोन्यवारयत्तथापरे ॥ ततोनिषण्णयोस्तयोःसुयोधनोवचोब्रवी
त् ॥३५९॥ दुःशासनैषांवासांसिदासानांनोव्यपाकुरु ॥ इत्युक्तोभ्यगमत्पार्थान्स्ववासांस्यथतेददुः॥३६०॥

तेचीरवसनाभूत्वातानशिष्टान्प्रकाश्यच ॥ निषेदुश्चक्षमायांतेक्षमामालंब्यविस्तृतां ॥ ३६१ ॥ पुनर्दुर्यो
धनेनोक्तःपार्थानामथपश्यतां ॥ चकर्षवासोद्रौपद्यास्तदावादीद्वृकोदरः ॥ ३६२ ॥ पापेषुपूर्वस्यतथाध
मस्यवंशेकुरूणामुरुधर्मशालिनां ॥ दुःशासनस्यास्यविदार्यवक्षःपिबामिरक्तंजगतःसमक्षं ॥३६३॥ विकृ
ष्यमाणेवसनेतुकृष्णासस्मारकृष्णंसुविशेषतोपि ॥ तदान्यदासीद्वसनंचतस्यादिव्यंसुसूक्ष्मंकनकावदातं
॥ ३६४ ॥ पुनःपुनश्चैवविकृष्यमाणेदुःशासनेऽन्यानिचतादृशानि ॥ बभूवुरंतंनजगामपापःश्रांतोन्यषीद
त्स्विन्नगात्रःसभायां ॥३६५॥ वस्त्रोच्चयेशैलनिभेप्रजातेदुर्योधनःप्राहसंजातकोपः ॥ प्रवेशयैनांगृहमेवशी
घ्रंकिंनश्चिरेणेतिसुमंदबुद्धिः॥ ३६६ ॥ तच्छ्रुत्वावचनंकृष्णाप्रतिज्ञामकरोत्तदा ॥ भीमोदुर्योधनंहंताकर्णं
हंताधनंजयः ॥ ३६७ ॥ शकुनिंत्वक्षकितवंसहदेवोहनिष्यति ॥ इत्युक्तेतत्तथेत्याहभीमसेनःसभातले
॥३६८॥ प्रतिज्ञामाददेपार्थस्तांमाद्रीनंदनस्तथा ॥ नकुलःप्रतिजज्ञेथशाकुनेयवधंप्रति ॥ ३६९ ॥ ततःसु
योधनानुजश्चकर्षपार्षतात्मजां ॥ गृहायतांनिशाम्यतुक्रुधाहमारुतात्मजः ॥३७०॥ अर्जुनार्जुननैवात्रक्ष ॥१०७९॥
मामेतातरोचते॥पतितस्यास्यदेहस्यकाष्ठविष्ठासमस्यच॥३७१॥फलानित्रीणिशिष्यंतेविद्याकर्मसुताइति॥

इतिवेदोदितंवाक्यंनसुतोदारधर्षणे ॥३७२॥ दुष्टदारोनचाप्नोतिलोकानर्थोंहिदूषितः ॥ अरक्षणाद्दूषिता
यानत्यागाच्चशुभंभवेत् ॥३७३॥ अतोघ्नसानुबंधकान्निहन्मिधार्तराष्ट्रकान् ॥ इतिब्रुवन्व्यलोकयद्रिपून्दह
न्निवौजसा ॥ ३७४ ॥ ददर्शचमहाघोरमादातुंपरिघंरुषा ॥ कर्तुंव्यवसितोबुद्ध्यानिःशेषान्धार्तराष्ट्रकान्
॥ ३७५ ॥ तदाशिवाववाशिरेसुयोधनाग्निगेहतः ॥ तथैवतत्पितुर्गृहेप्यभूद्भयानकंबहु ॥३७६॥ निमि
त्तान्यतिघोराणिकुपितेमारुतात्मजे ॥ दृष्ट्वांबिकेयोविदुरंपप्रच्छैषांफलंद्रुतं॥३७७॥आहतंविदुरोज्येष्ठंक्षणे
स्मिंस्तवपुत्रकाः॥ सानुबंधानशिष्यंतिवृकोदरबलाहताः ॥३७८॥ क्रीडसेर्भकवत्त्वंहिकिंजितंकिंजितंत्वि
ति॥अधर्मेणजितानत्रजितान्पश्यसिपांडवान्॥३७९॥ स्त्रीषुद्यूतेषुवादत्तंमदांधेननरेणवा ॥ नदत्तमाहुर्वि
द्वांसस्तस्यबंधुभिरेवच ॥३८०॥ आहार्यंपुनराहुश्चतथापिनतुपांडवैः ॥ तत्कृतंतवपुत्राणांख्यापयद्भिरशि
ष्टतां ॥३८१॥ इत्युक्तआहांबिकेयोनिमित्तानांफलंकथं ॥ नभवेदितिसप्राहद्रुतंकृष्णाविमोच्यतां॥३८२॥
तोषयस्ववरैश्चैनामन्यथातेसुतान्मृतान् ॥ विद्धिभीमेननिष्पिष्टान्नात्रतेसंशयोभवेत् ॥३८३॥ कृष्णाचपां
डवाश्चैवतपोवृद्धिमभीप्सवः ॥ तपसानैवधक्ष्यंतितेनजीवंतितेसुताः ॥३८४॥ तथापियदिकृष्णांत्वंनमो

चयसितेसुतान् ॥ हनिष्यतिनसंदेहोबलेनैववृकोदरः ॥३८५॥ इतीरितेविनिर्भर्त्स्यपुत्रंदुःशासनंनृपः ॥ अमोचयद्वरैश्चैनांछंदयामासपार्षतीं ॥३८६॥ छंदितासावरैस्तेनधर्मेभागवतेस्थिता ॥ नैवात्मनोवरान्वव्रेवव्रेतेषांविमोक्षणं ॥३८७॥ युधिष्ठिरस्यसभ्रातुःसराष्ट्रस्यविमोक्षणं ॥ ददौनृपोस्यानपुनश्छंद्यमानापिसावृणोत् ॥३८८॥ भर्तुर्विष्णोश्चनान्यस्माद्वरस्वीकारइष्यते॥एवंहिभगवद्धर्मस्तस्मात्सानावृणोत्परं॥३८९॥ अधर्मतोहृतत्वाच्चतद्दानंनवरोभवेत् ॥ इतिमत्वापांडवानांवव्रेकृष्णाविमोक्षणं ॥ ३९० ॥ श्वशुरादैहिकवराःक्षत्रियायास्त्रयोयतः ॥ उक्ताःशतंचविप्रायाधर्मेभागवतेततः ॥ हेतुनातेनवव्रेसानान्यत्किंचिदतःपरं ॥३९१॥ ततोविमुक्ताःप्रययुश्चपार्थागुरून्प्रणम्यस्वपुरंसकृष्णाः ॥ दुर्योधनानंतरजोजगादतातंनिजंपापकृतांप्रधानः ॥ ३९२ ॥ समस्तपांडवश्रियंसमागतामहोपुनः ॥ व्यमोचयोवृकोदराद्वधश्चनोध्रुवंभवेत् ॥ ३९३ ॥ अतःपुनश्चपांडवान्समाह्वयस्वनःकृते ॥ पुनश्चदेवनंभवेज्जितावनंप्रयांतुच ॥ ३९४ ॥ तेनोक्तःसतदाराजापांडवान्पुनराह्वयत् ॥ पुनःपित्रासमाहूतोदेवनाययुधिष्ठिरः ॥ भ्रातृभिर्वार्यमाणोपिकृष्णयाचागमत्सभां ॥ ३९५ ॥ द्वादशाब्दंवनेवासमज्ञातंत्वेकवत्सरं ॥ वासंप्रसिद्धनृपतेःपुरेनैवातिदूरतः

॥३९६॥ कृष्णायाःपांडवानांवादर्शनेऽज्ञातवासिनां ॥ एकस्यापिसमस्तानांद्वादशाब्दंपुनर्वनं ॥ ३९७॥
वत्सराज्ञातवासंचत्यागेप्युक्तविधेस्तथा ॥ दुर्योधनःपणंचक्रेबुद्ध्यादुःशासनोक्तया ॥३९८॥ गांधारेणपुन
श्चाक्षहृदयज्ञेनधर्मजः ॥ पराजितोवनंयातुमैच्छत्सभ्रातृकोयदा ॥ ३९९ ॥ तदानन्तपापकृत्सुयोधनानु
जोहसन् ॥ वदंश्चमारुतात्मजंपुनःपुनश्चगौरिति ॥४००॥ उवाचचपुनःकृष्णांनृत्यन्नेवसभातले ॥ अप
तिर्ह्यसिकल्याणिगच्छदुर्योधनालयं ॥४०१॥ एतेखिलाःषंढतिलास्तमोंधंप्राप्तानचैषांपुनरुत्थितिःस्यात् ॥
इतिब्रुवाणोनुचकारभीमंतदाऽहसन्धार्तराष्ट्राश्चसर्वे ॥४०२॥ तदाकरोद्भीमसेनःप्रतिज्ञांहंतास्मिवोह्यखिला
न्संगरेहं ॥ इतीरितेशरणंद्रोणमेवजग्मुःसमस्ताधृतराष्ट्रपुत्राः ॥ ४०३ ॥ यत्रद्रोणस्तत्रपुत्रस्तत्रभीष्मःकृप
स्तथा ॥ नचात्येतिगुरून्भीमइतितंशरणंययुः ॥४०४॥ अब्रवीद्धार्तराष्ट्रांश्चद्रोणोविप्रोपिसन्नहं ॥ सपुत्रः
सकृपःशस्त्रंग्रहीष्येभवतांकृते ॥४०५॥ रक्षणेभवतांचैवकुर्यांयत्नंस्वशक्तितः ॥ नतुभीमाद्रक्षितुंवःशक्तःस
त्यंब्रवीम्यहं ॥४०६॥ ततोययुःपांडवास्तेसभायावनायकृष्णासहिताःसुशूराः ॥ गत्वानुचक्रेयुवसिंहखेल
गतिंभीमंधार्तराष्ट्रोपहस्य ॥४०७॥ दृष्ट्वासभायाअर्धनिष्क्रांतदेहोव्यावृत्यभीमःप्राहसंरक्तनेत्रः ॥ ऊरुंतवा

न्यंचरणेविभेत्स्यइत्युक्त्वासौनिर्गतोसत्सभायाः ॥४०८॥ प्रयातानन्ुतान्कुंतीप्रययौपुत्रगर्द्धिनी ॥ रोरुद्य
मानांविदुरःस्थापयामासतांगृहे ॥ प्रणम्यतांययुःपार्थाःसकृष्णाःशीघ्रगामिनः ॥४०९॥ युधिष्ठिरोऽवाग्व
दनोययौनक्रोधचक्षुषा ॥ दहेयंकौरवान्सर्वानितिकारुणिकोनृपः ॥ ४१० ॥ उद्धृत्यबाहूप्रययौबाहुशाली
वृकोदरः ॥ आभ्यामेवाखिलान्छत्रून्छक्तोहंतुमहंत्विति ॥४११॥ अबद्धकेशाप्रययौद्रौपदीसासभातला
त् ॥ मुक्तकेशाभविष्यंतिधार्तराष्ट्रस्त्रियस्त्विति ॥ ४१२ ॥ वर्षन्पांसून्ययौपार्थइत्थंशत्रुषुसायकान् ॥ वर्ष
यामीत्यभिप्रायःपरमास्त्रविदांवरः ॥ ४१३ ॥ यमाववाङ्मुखौयातौनावयोःशत्रवोमुखं ॥ पश्यंत्वस्यामव
स्थायामित्येवधृतचेतसौ ॥४१४॥ प्रेतसंस्कारसूक्तानिपठन्धौम्योग्रतोययौ ॥ हतेषुधार्तराष्ट्रेषुमयाकार्याः
क्रियाइति ॥ ४१५ ॥ तानथानुययुःसूतारथैःपरिचतुर्दशैः ॥ सूदाःपौरोगवाश्चैवभृत्यायेत्वाप्तकारिणः
॥ ४१६ ॥ ततस्तेजाह्नवीतीरेवनेवटमुपाश्रिताः ॥ न्यषीदन्नागतान्दृष्ट्वासमस्तान्पुरवासिनः ॥ ४१७ ॥
ततस्तुतेसर्वजगन्निवासंनारायणंनित्यसमस्तसद्गुणं॥स्वयंभुशर्वादिभिरर्चितंसदाभक्त्याऽस्मरन्भक्तभवापहं ॥१०८१॥
प्रभुं॥४१८॥इतिश्रीमदानंदतीर्थ०श्रीमन्महाभारततात्पर्यनिर्णयेपांडववनप्रवेशोनामएकविंशोऽध्यायः२१

ॐआगंतुकामान्पुरवासिनस्तेसंस्थाप्यकृच्छ्रेणकुरुप्रवीराः॥रात्रौप्रविष्टागहनंवनंचकिर्मीरमासेदुरथोनरा
शं ॥१॥ बकानुजोसौनिखिलैरजेयोवराद्गिरीशस्यनिहंतुकामः ॥सदारसोदर्यमभिप्रसस्रेभीमंमहावृक्षगिरी
न्प्रमुंचन् ॥२॥ ससंप्रहारंसहतेनकृत्वाभीमोनिपात्याशुधरातलेतं ॥ चक्रेमखेसंगरनामधेयेप्रसह्यनारायण
दैवतेपशुं ॥ ३ ॥ निहत्यरक्षोवनमध्यसंस्थास्तदायतीनामयुतैःसमेताः ॥ अशीतिसाहस्रमुनिप्रवीरैर्दशां
शयुक्तैःसहिताव्यचिंतयन् ॥४॥ विचिंत्यतेषांभरणायधर्मजःसंपूज्यसूर्यस्थितमच्युतंप्रभुं ॥ दिनेऽक्षयान्नं
पिठरंतदापरत्नादिदंकामवरान्नदंच ॥५॥ बभारतेनैवयुधिष्ठिरस्तान्प्रत्येकशस्त्रिंशतदासदासिकान् ॥ सुव
र्णपात्रेषुहिभुंजतेयेगृहेतदीयेबहुकोटिदासके ॥ ६ ॥ सत्संगमाकांक्षिणएवतेवसन्पार्थैःसहान्येचमुनींद्रवृं
दाः॥ शृण्वंतएभ्यःपरमार्थसाराःकथावदंतश्चपुरातनास्तथा ॥७॥ एवंगजानांबहुकोटिबृंदांस्तथारथानां
चहयांश्चबृंदशः ॥ विसृज्यरत्नानिनरांश्चबृंदशोवनेविजह्रुर्दिविदेववत्सुखं ॥८॥ गवांचलक्षंप्रददातिनित्य
शःसुवर्णभारांश्चशतंयुधिष्ठिरः ॥ सभ्रातृकोसौवनमाप्यशक्रवन्मुमोदविप्रैःसहितोयथासुखं ॥९॥ पार्थेषु

 यातेषुकिमत्रकार्यमितिस्मपृष्टोविदुरोग्रजेन ॥ आहूयराज्यंप्रतिपादयेतिप्राहैनमाहाथरुषांबिकेयः ॥१०॥ 
॥१५५॥ ज्ञातंप्रतीपोसिममात्मजानांनमेत्वयाकार्यमिहास्तिकिंचित्।यथेष्टतस्तिष्ठवागच्छवेतिप्रोक्तोययौविदुरःपांडु अ० २२
पुत्रान् ॥११॥ तस्मिन्गतेभ्रातृवियोगकर्शितःपपातभूमौसहसैवराजा ॥ संज्ञामवाप्यादिशदाशुसंजयंजी
वामिचेदाशुममानयानुजं ॥१२॥ इतीरितःसंजयःपांडवेयान्प्राप्यानयद्विदुरंशीघ्रमेव ॥ सोप्यागतःक्षिप्रम
पास्तदोषोज्येष्ठंववंदेथसचैनमाश्लिषत् ॥ अंकंसमारोप्यसमूर्ध्निचैनमाघ्रायलेभेपरमांमुदंतदा ॥१३॥ क्षत्तार
मायांतमुदीक्ष्यसर्वेससौबलाधार्तराष्ट्राअमर्षात्॥संमंत्र्यहंतुंपांडवानामुतैकंछन्नोपधेनैवससूतजाययुः।१४।
विज्ञायतेषांगमनंसमस्तलोकांतरात्मापरमेश्वरेश्वरः॥ व्यासोभिगम्यावददांबिकेयंनिवारयाश्वेवसुतंतवेति
॥१५॥ अवाप्यपार्थानयमद्यमृत्युंसहानुबंधोगमिताह्यसंशयं ॥इतीरितेतेननिवारयेतिप्रोक्तोहरिःप्राहनसं
वदेतैः॥१६॥मैत्रेयआयास्यतिसोपिवाचंशिक्षार्थमेतेष्वभिधास्यतीह ॥ तांचेत्करोत्येषसुतस्तवास्यभद्रंतदा
शप्स्यतित्वन्यथासः ॥१७॥ उक्त्वेतिराजानमनंतशक्तिर्व्यासोययौतत्रगतेषुतेषु॥ सुयोधनाद्येषुहतेषुपार्थैं ॥१०८२॥
र्भूभारहानिर्नभवेदितिप्रभुः॥१८॥सर्वांश्चचेष्टाभगवन्नियुक्ताःसदासमस्तस्यचितोचितश्च ॥तथापिविष्णुर्वि

निवारयेत्कचिद्वाचाविधत्तेचजनान्विडंबयन्॥१९॥मैत्रेयअगादथभूपतिश्चपुत्रान्समाहूयसकर्णसौबलान्॥
संपूजयामासमुनिंसचाहदातुंराज्यंपांडवान्सप्रशंसन्॥२०॥विशेषतोभीमबलंशशंसकिर्मीरनाशादिवदन्मु
नींद्रः॥श्रुत्वाहसंस्तद्धृतराष्ट्रपुत्रआस्फालयामासनिजोरुमुग्रः॥२१॥शशापचैनंमुनिरुग्रतेजास्तवोरुभेदाय
भवेत्सुयुद्धं॥इत्यूचिवान्धृतराष्ट्रानतोपियदिनचेद्राज्यदस्त्वंतथेति॥२२॥श्रुत्वातुकिर्मीरवधंस्वपित्रापृष्टंक्षत्रो
क्तंसोत्रसद्धार्तराष्ट्रः॥वनेवसंतोथपृथासुतास्तेवार्तांस्वकीयांप्रापयामासुराशु॥२३॥कृष्णेसोपिद्रुतमायात्स
सत्यःसंबंधिनोयेचपांचालमुख्याः॥क्रुद्धंकृष्णंधार्तराष्ट्रायपार्थाःक्षमापयामासुरुच्चैर्गृणंतः॥२४॥गुणांस्तदी
यानमितान्प्रणम्यतदारुदंतीद्रौपदीचापपादौ॥सापादयोःपतितावासुदेवमस्तौत्समस्तप्रभुमात्मतंत्रं॥२५॥
अचिंत्यनित्याव्ययपूर्णसद्गुणार्णवैकदेहाखिलदोषदूर॥रमाब्जजेशसुरेंद्रपूर्ववृंदारकाणांसतताभिवंद्य॥२६॥
समस्तचेष्टाप्रदसर्वजीवप्रभोविमुक्ताश्रयसर्वसार॥इतिब्रुवंतीसकलानुभूतंजगादसर्वेशितुरच्युतस्य॥यस्या
धिकानुग्रहपात्रभूतास्वयंहिशेषेशविपादिकेभ्यः॥२७॥ श्रुत्वासमस्तंभगवान्प्रतिज्ञांचकारतेषामखिलाश्च
योषाः॥पतीन्समालिंग्यविमुक्तकेशाभीमाहतान्दर्शयेनान्यथेति॥२८॥ तांसांत्वयित्वामधुरैःसुवाक्यै

नारायणोवाचमिमांजगाद ॥ २९ ॥ यदीहाहंस्थितोनैवंभविताहंत्वयोधयं ॥ साल्वराजंदुरात्मानंहत
श्चासौसुपापकृत् ॥ ३० ॥ सन्निधानेथदूरेवाकालव्यवहितेपिवा ॥ स्वभावाद्वाव्यवहितेवस्तुव्यवहितेपि
वा ॥ ३१ ॥ नाशक्तिर्विद्यतेविष्णोर्नित्याव्यवहितत्वतः ॥ तथापिनरलोकस्यकरोत्यनुकृतिंप्रभुः ॥३२॥
दुष्टनांदोषवृद्ध्यर्थंभीमादीनांगुणोन्नतेः ॥ युधिष्ठिरेतिवृद्धंतुराजसूयादिसंभवं ॥३३॥ धर्मंचसंक्रामयितुं
कृष्णायामनुजेषुच ॥ योग्यताक्रमतोविष्णुरिच्छयेत्थमचीकॢपत् ॥३४॥ एधमानद्विडित्येवविष्णोर्नामहिवै
दिकं ॥ स्वयोग्यतायाअधिकंधर्मज्ञानादिजंफलं ॥३५॥ भीष्मद्रोणांबिकेयादेःपार्थेष्वेवनिधापितुं ॥ पुन
श्चपापवृद्ध्यर्थमजोदुर्योधनादिषु ॥३६॥ व्यासोंबिकासुतंप्राहपार्थामेभ्यधिकंप्रियाः ॥ तेषांप्रवासनंचैवप्रियं
नममसर्वथा ॥३७॥ इतिदुर्योधनादीनांपापवृद्ध्यर्थमेवसः ॥ प्रियाइत्येवकथनात्पांडवानांशुभोन्नतेः ॥३८॥
गुरुत्वाद्भीमसेनस्यक्षमाद्यूतेर्जुनादिनां ॥ नातिधर्मस्वरूपोत्रधर्मोभीमेनिरोपधः ॥३९॥ द्रौपद्याअप्यतिक्ले
शात्क्षमाधर्मोमहानभूत् ॥ साहिभीममनोवेदनकार्यंःशापइत्यलं ॥४०॥ तस्माद्यथायोग्यतयाहरिणाधर्म
वर्धनं ॥ कृतंतत्रासन्निधानंकारणंकेशवोब्रवीत् ॥ ४१ ॥ साल्वंश्रुत्वासमायांतंरौक्मिणेयादयोमया ॥ प्र

स्थापिताहिभवतांसकाशेतेययुःपुरीं ॥ तदासाल्वोपिसौभेनद्वारकामर्दयन्भृशं ॥४२॥ प्रद्युम्नआशुनिरगा
दथसर्वसैन्यैरन्यैश्चयादवगणैःसहितोनुजैश्च॥साल्वोवगम्यतनयंममतद्विमानात्पापोवरुह्यरथमारुहदत्रयो
द्धुं॥ ४३ ॥ कृत्वाशुयुद्धममुनाममपुत्रकोसावस्त्राणितस्यविनिवार्यमहास्त्रजालैः ॥ दत्तंमयाशरममोघमथा
ददेतंहंतुंनृपंकृतमतिस्त्वशृणोद्वचःखे ॥ ४४॥ नारायणेनहिपुरामनसाभिक्लृप्तंकृष्णावतारमुपगम्यनिहन्मि
साल्वं ॥ इत्येवतेनहरिणापिसभार्गवेणविद्रावितोननिहतःस्वमनोनुसारात् ॥४५॥ वध्यस्त्वयानहिततोय
मयंचबाणश्चक्रायुधस्यदयितोनितराममोघः॥मामुंचतेनतमिमंविनिवर्तयेहंसाल्वंहदिस्थितइतीरितमीरणे
न ॥ ४६॥ श्रुत्वावचःसपवनस्यशरंत्वमोघंसंजहआशुसचसाल्वपतिःस्वसौभं ॥ आरुह्यबालकलहेनकिम
त्रकार्यंकृष्णेनसंगरइतिप्रययौस्वदेशं ॥ ४७॥ प्रद्युम्नसांबगदसारणचारुदेष्णाःसेनांनिहत्यसहमंत्रिगणैस्त
दीयां ॥ आह्लादिनःस्वपुरमाययुरप्यहंचतत्रागमंसपदितैःश्रुतवानशेषं ॥४८॥ यस्मिञ्छरेकरगतेविजयोध्रु
वःस्यान्मत्तेजसातदनुसंग्रहणात्सुतान्मे॥यातंनिशम्यरिपुमात्मपुरींचभग्नांदृष्ट्वैवतेनतदनुव्रजनंकृतंमे॥४९॥
तंसागरोपरिगसौभगतंनिशाम्यमुक्तेचतेनमयिशस्त्रमहास्त्रवर्षे॥ तंसंनिवार्यचमयाशरपूगविद्धोमायायुयो

जमयिपापतमःससाल्वः ॥५०॥ ताःक्रीडयाक्षणमहंसमरेनिशाम्यज्ञानास्त्रतःप्रतिविधूयबहूंश्चदैत्यान् ॥ ह
त्वाशुतंचगिरिवर्षिणमाशुसौभंवार्धौन्यपातयमरींद्रविभिन्नबंधं ॥५१॥ तंस्यंदनेस्थितमथोविभुजंविधाय
बाणेनतद्रथवरंगदयाविभिद्य॥चक्रेणतस्यचशिरोविनिकृत्त्यधातृशर्वादिभिःप्रतिनुतःस्वपुरीमगांच ॥५२॥
तस्मादिदंव्यसनमासहिविप्रकर्षान्मेकार्यतस्त्वितिनिगद्यपुनश्चपार्थान्॥कृष्णांचसांत्वयितुमत्रदिनान्युवास
सत्याचसोमकसुतामनुसांत्वयंती ॥५३॥ पांडवानांचयाभार्याःपुत्राअपिचसर्वशः ॥ अन्वेवपांडवान्याता
वनमत्रैवसंस्थिताः ॥५४॥ धृष्टद्युम्नस्ततःकृष्णांसांत्वयित्वैवकेशवं ॥ प्रणम्यसमनुज्ञातोभागिनेयैःपुरंययौ
॥५५॥ धृष्टकेतुश्चभगिनींकाशिराजःसुतामपि ॥ पुरंययतुरादायकुंत्यैवान्याःसहस्थिताः ॥५६॥ पार्वती
नकुलस्यासीद्भार्यापूर्वंतिलोत्तमा ॥ पूर्वोक्तैचैवयमयोर्भार्येकुंत्यानिवारिताः ॥५७॥ सुभद्रामभिमन्युंचरथ
मारोप्यकेशवः ॥ पांडवानभ्यनुज्ञायसभार्यःस्वपुरंययौ ॥५८॥ कंचित्कालंद्रौपदेयाउष्यपांचालकेपुरे ॥
ययुर्द्वारावतीमेवतत्रोषुःकृष्णपालिताः ॥५९॥ ततःपरंधर्मराजोनिर्विण्णःस्वकृतेनह ॥ भ्रातृभार्यापदेकृ ॥१०८४॥
ष्णांस्थापयामाससर्वदा ॥६०॥ ऊषुर्वनेचतेपार्थामुनिशेषान्नभोजिनः ॥ भुक्तवत्स्वेवानुजेषुभुंक्तेराजायु

धिष्ठिरः ॥६१॥ अलंघ्यत्वात्तदाज्ञायाअनुजाःपूर्वभोजिनः ॥ तस्यानंतरमेवैकाभुंक्तेसापार्षतात्मजा ॥६२॥
एवंसदाविष्णुपरायणानांतत्प्रार्पणान्नैकभुजांप्रयातः ॥ संवत्सरस्तत्रजगादकृष्णाभीमाज्ञयाधर्मराजंसुवेत्री
॥६३॥ अतिमार्दवयुक्तत्वाद्धर्मराजश्चतुर्दशे ॥ अपिवर्षेगुरुभयाद्राज्यंनेच्छेदितिप्रभुः ॥ मारुतिःप्रेषयामा
सकृष्णांप्रस्तावहेतवे ॥६४॥ क्षमासर्वत्रधर्मोनपापहेतुश्चदुर्जने ॥ राज्ञांसामर्थ्ययुक्तानामितिसंस्थाप्यशा
स्त्रतः ॥६५॥ हत्वाचतुर्दशेवर्षेधार्तराष्ट्रानराज्यदान् ॥ कर्तुंराज्यंपुरोगंताभवानीत्यग्रजेनह ॥६६॥ का
रयन्सत्यशपथंविवादस्यक्रमेच्छया ॥ आदिशत्प्रथमंकृष्णांभीमःसानृपमब्रवीत् ॥६७॥ नैवक्षमाकुजनता
सुनृपस्यधर्मस्तांत्वंवृथैवधृतवानसिसार्वकालं ॥ इत्युक्तआहनृपतिःपरमाक्षमैवसर्वत्रतद्विधृतमेवजगत्सम
स्तं॥६८॥ कर्ताचसर्वजगतःसुखदुःखयोर्हिनारायणस्तदनुदत्तमिहास्यसर्वं ॥ तस्मान्नकोपविषयोस्तिकुतश्च
कश्चित्तस्मात्क्षमैवसकलेषुपरोस्यधर्मः ॥६९॥ इत्युक्तवंतंनृपमाहपार्षतीयदिक्षमासर्वनरेषुधर्मः ॥ राज्ञोनकृ
त्यंनचलोकयात्राभवेज्जगत्कापुरुषैर्विनश्येत् ॥७०॥सत्यंचविष्णुःसकलप्रवर्तकोरमाविरिंचेशपुरःसराश्च ॥
काष्ठादिवत्तद्वशगासमस्तास्तथापिनव्यर्थतापौरुषस्य ॥७१॥ तदाज्ञयापुरुषश्रेष्ठमानश्रेष्ठानुसारेणशुभाशु

भस्य ॥ भोक्तानतच्चेष्टितमन्यथाभवेत्कर्तातस्मात्पुरुषोप्यस्यवश्यः ॥ ७२ ॥ वृथायदिस्यात्पौरुषंकस्यहेतो र्विधिर्निषेधश्चसमस्तवेदगः ॥ विधेर्निषेधस्यचनैवगोचरःपुमान्यदिस्याद्भवतोहितौहरेः ॥७३॥ तेनैवलेप श्चभवेदमुष्यपुण्येनपापेनचनैवचासौ॥लिप्येतताभ्यांपरमःस्वतंत्रः कर्ताततःपुरुषोप्यस्यवश्यः ॥७४॥ इती रितोधर्मजःकृष्णयैवनिरुत्तरत्वंगमितस्वभर्त्सयत्॥कुतर्कमाश्रित्यहरेरपित्वमस्वातंत्र्यंसाधयसीतिचोक्त्वा ॥७५॥ छलेनतेनप्रतिभर्त्सितासाक्षमापयामासनृपंयतःस्त्री ॥ वाचालतानातितरांहिशोभतेस्त्रीणांततः प्राहवृकोदरस्तं ॥७६॥ राजन्विष्णुःसर्वकर्तानचान्यस्तत्तंत्रमेवान्यदसौस्वतंत्रः ॥ तथापिपुंसाविहितंस्व कर्मकार्यंत्याज्यंचान्यदत्यंतयत्नात् ॥७७॥ प्रत्यक्षमेतत्पुरुषस्यकर्मतेनानुमेयाप्रेरणाकेशवस्य ॥ स्वकर्मकृ त्वाविहितंहिविष्णुनातत्प्रेरणेत्येवबुधोनुमन्यते ॥ ७८ ॥ तेनैतिसम्यग्गतिमस्यविष्णोर्जनोशुभोदैवमित्ये वमत्वा ॥ हित्वास्वकंकर्मगतिंचतामसींप्रयातितस्मात्कार्यमेवस्वकर्म ॥ ७९ ॥ ज्ञातव्यंचैवास्यविष्णोर्वश त्वंकर्तव्यंचैवात्मनःकार्यकर्म ॥ प्रत्यक्षैषाकर्तृताजीवसंस्थातथागमादनुमानाच्चसर्वं ॥ ८० ॥ विष्णोर्वशेत न्नहेयंद्वयंचजानन्विद्वान्कुरुतेकार्यकर्म ॥ तत्प्रेरकंविष्णुमेवाभिजानन्भवेत्प्रमाणत्रितयानुगामी ॥८१॥ पू

र्णंप्रमाणंतत्रयंचाविरोधेनैकत्रस्थंतत्रयंचाविरोधि ॥ पृथङ्मध्यंचाप्रमाणंविरोधिस्यात्ततस्मात्रयमेकत्रकार्यं ॥८२॥ अज्ञःप्रत्यक्षंत्वपहायैवदैवंमत्वाकर्तृस्वात्मकर्मप्रजह्यात् ॥ विद्वाञ्जीवंविष्णुवशेविदित्वाकरोतिकर्तव्यमजस्रमेव ॥८३॥ स्वभावाख्यायोग्यतायाहठाख्यायानादिसिद्धासर्वजीवेषुनित्या ॥ साकारणंप्रथमंतुद्वितीयमनादिकर्मैवतथातृतीयः ॥८४॥ जीवप्रयत्नःपौरुषाख्यस्तदेतत्रयंविष्णोर्वशगंसर्वदैव ॥ सकस्यचिन्नवशेवासुदेवःपरात्परःपरमोसौस्वतंत्रः ॥८५॥ हठश्चासौतारतम्यस्थितोहिब्रह्माणमारभ्यकलिश्चयावत् ॥ हठाच्चकर्माणिभवंतिकर्मजोयत्नोयतोहठकर्मप्रयोक्ता ॥८६॥ विनायत्नंनहठोनापिकर्मफलप्रदोवासुदेवोखिलस्य ॥ स्वातंत्र्यशक्तेर्विनियामकोहितथाप्येतान्सोप्यपेक्ष्यैवयुंजेत् ॥८७॥ एतानपेक्ष्यैवफलंददानीत्यस्यैवसंकल्पइतिस्वतंत्रता ॥ नास्यापगच्छेत्सहिसर्वशक्तिर्नाशक्तताक्वचिदस्यप्रभुत्वात् ॥ ८८ ॥ तस्मात्कार्यंतेनक्लृप्तंस्वकर्मतत्पूजार्थंतेनतत्प्राप्तिरेव ॥अतोन्यथानिरयःसर्वथास्यात्स्वकर्मविप्रस्यजपोपदेशौ ।८९। विष्णोर्मुखाद्विप्रजातिःप्रवृत्तामुखोत्थितंकर्मतेनास्यसोदात् ॥९०॥ बाह्वोर्जातःक्षत्रियस्तेनबाह्वोःकर्मास्यपापप्रतिवारणंहि ॥ प्रवर्तनंसाधुधर्मस्यचैवमुखस्यबाह्वोश्चातिसामीप्यतोस्य ॥ ९१ ॥ जपोपदेशौक्षत्रिय

स्यापिविष्णुश्चक्रेधर्मोयज्ञकर्मापिविप्रे ॥ वैश्योयस्मादूरुजस्तेनतस्यप्रजावृद्धिस्तज्जकर्मैवधर्मः ॥ ९२ ॥ त
त्साहृश्यात्स्थावराणांचवृद्धिःकरोरूर्वोःसन्निकृष्टत्वहेतोः ॥ वार्तात्मकंकर्मधर्मंचकारविष्णुस्तस्यैवांघ्रिजःशूद्र
उक्तः ॥ ९३ ॥ गतिप्रधानंकर्मशुश्रूषणाख्यंसाहृश्यतोहस्तपदोस्तथैव ॥ हस्तोद्भवंकर्मतस्यापिधर्मःसंतान
वृद्धिश्चसमीपगत्वात् ॥ ९४ ॥ भुजावुरोहृदयंयद्बलस्यज्ञानस्यचस्थानमतोनृपाणां ॥ बलंज्ञानंचोभयंधर्म
उक्तःपाणौकृतीनांकौशलंकेवलंहि ॥९५॥ तस्मात्पाण्योरूरुपदोरुपस्थितेर्विट्शूद्रकौकर्मणांकौशलेतौ ॥
प्राधान्यतोधर्मविशेषएषसामान्यतःसर्वएवाखिलानां ॥९६॥ वर्यंहिदेवास्तेनसर्वंहिकर्मप्रायेणनोधर्मतामेति
शश्वत्॥एतैर्धर्मैर्विष्णुनापूर्वक्लृप्तैःसर्वैर्वर्णैर्विष्णुरेवाभिपूज्यः ॥९७॥ तद्भक्तिरेवाखिलानांचधर्मोयथायोग्यं
ज्ञानमस्यापिपूजा ॥ पितागुरुःपरमंदैवतंचविष्णुःसर्वेषांतेनपूज्यःसएव ॥९८॥ तद्भक्तत्वाद्देवताश्चाभिपू
ज्याविशेषतस्तेषुयेत्यंतभक्ताः ॥ संपूजितोवासुदेवःसमुक्तिंदद्यादेवापूजितोःदुखमेव ॥९९॥ स्वतंत्रत्वात्सु
खदुःखप्रदोसौनान्यःस्वतंत्रस्तद्वशायत्समस्ताः ॥ स्वतंत्रत्वात्सुखसज्ज्ञानशक्तिपूर्वैर्गुणैःपूर्णयेषोखिलैश्च
॥१००॥ स्वतंत्रत्वात्सर्वदोषोज्झितश्चनिःसीमशक्तिर्हियतःस्वतंत्रः ॥ दोषास्पृष्टौगुणपूर्तौचशक्तिर्निःसीम

त्वाद्धियतेतस्ययस्मात् ॥ १०१ ॥ एवंगुणैरखिलैश्चापिपूर्णोनारायणःपूज्यतमःस्वधर्मैः ॥ अस्माकंयत्तेनना
तिक्षमैवधर्मोदुष्टानांवारणंह्येवकार्यं ॥१०२॥ हन्याद्दुष्टान्यःक्षत्रियःक्षत्रियांश्चविशेषतोयुद्धगतान्स्मरन्हरिं॥
स्वबाहुवीर्येणचतस्यबाहूचैतन्यमात्रौभवतःसदेहौ ॥१०३॥ पापाधिकांश्चैवबलाधिकांश्चहत्वामुक्तावधिका
नंदवृद्धिः ॥ प्रीतिश्चविष्णोःपरमैवतत्रतस्माद्धंतव्याःपापिनःसर्वथैव ॥ १०४ ॥ येत्वक्षधूर्ताग्रहणंगतावापा
पास्तेन्यैर्घातनीयाःस्वदोर्भ्यां ॥ राजानंवाराजपुत्रंतथैवराजानुजंचाभियातंनिहन्यात् ॥१०५॥ राज्ञःपुत्रोप्य
कृतोद्वाहकोयःसघातनीयोनस्वयंवध्यएव ॥ क्रूरंचान्यद्धर्मयुक्तंपरैस्तत्प्रसाधनीयंक्षत्रियैर्नस्वकार्यं ॥१०६॥
एवंधर्मोविहितोवेदएववाक्यंविष्णोःपंचरात्रेषुतादृक् ॥ अक्षद्यूतंनिकृतिःपापमेवकृतंत्वयागर्हितंसौबलेन
॥१०७॥ नकुत्रचिद्विधिरस्यास्तितेननतद्दत्तंद्यूतहृतंवदंति ॥ भीतेनदत्तंद्यूतदत्तंतथैवदत्तंकामिन्यैपुनराहा
र्यमेव ॥ १०८ ॥ एवंधर्मःशाश्वतोवैदिकोहिद्यूतेस्त्रियांनाल्पमाहार्यमाहुः ॥ यद्येषांवैभोग्यमल्पंतदीयंभो
गेनतद्बंधुभिस्तच्चहार्यं ॥१०९॥ निवारणेपुरुषस्यत्वशक्तौतद्राज्यंनःपुनराहार्यमेव ॥ त्वंधर्मनिष्ठश्चाग्रज
श्चेतिराजन्नृतेनुज्ञांनमयातत्कृतंच ॥११०॥ दातास्यनुज्ञांयदितान्निहत्यत्वय्येवराज्यंस्थापयाम्यद्यसम्यक् ॥

सत्यंपापेष्वपिकर्तुंयदीच्छातथापिमासाद्वादशनःप्रयाताः ॥१११॥ वेदप्रामाण्याद्वत्सरास्तेहिमासैःसहस्रा
ब्दंसत्रमुक्तंनराणां ॥ अज्ञातमेकंमासमुष्याथशत्रून्निहत्यराज्यंप्रतिपादयामः ॥११२॥ मामित्राणांतापक
स्त्वंभवेथास्तथाऽमित्राणांनंदकश्चैवराजन् ॥ ज्वलस्त्वारीणांमूर्ध्निमित्राणिनित्यमाह्लादयन्वासुदेवंभजस्व
॥११३॥स्वतंत्रत्वंवासुदेवस्यसम्यक्प्रत्यक्षतोदृश्यतेह्यद्यराजन् ॥ यस्मात्कृष्णोव्यजयच्छंकरादीञ्जरासुतादी
न्कादिवैरैरजेयान् ॥ ११४ ॥ ब्रह्मादीनाप्रकृतेस्तद्वशत्वंदृष्टंहिनोबहुशोव्यासदेहे ॥ पाराशर्योदिव्यदृष्टिंप्र
दायस्वातंत्र्यंनोदर्शयत्सर्वलोके ॥११५॥ तस्माद्राजन्नभिनिर्याहिशत्रून्हंतुंसर्वान्भोक्तुमेवाधिराज्यं ॥ ए
वंचतेकीर्तिधर्मौमहांतौप्राप्यौराजन्वासुदेवप्रसादात् ॥११६॥ एवमुक्तोब्रवीद्धीमंधर्मपुत्रोयुधिष्ठिरः ॥ त्र
योदशाब्दस्यांतेहंकुर्यामेवत्वदीरितं ॥११७॥ सत्यमेतन्नसंदेहःसत्येनात्मानमालभे ॥ लोकापवादभीरुंमां
नातोन्यद्वक्तुमर्हसि ॥ ११८ ॥ तुदसेचातिवाचामांयद्येवंभीममांवदेः ॥ तदैवमेऽत्ययःकार्योहंतव्याश्चैवश
त्रवः ॥ नैतादृशैरिदानींतुवाक्यैर्बाधितुमर्हसि ॥ ११९ ॥ भीष्मद्रोणादयोस्त्रज्ञानिवार्याश्चकथंयुधि ॥ पू
ज्यास्तेबाहुयुद्धेननिवार्याःकथंचन ॥१२०॥ अस्त्राणिजानन्नपिहिप्रयोजयसिनक्वचित् ॥ तस्मात्तदैवगंत

व्यंविज्ञातास्त्रेधनंजये ॥१२१॥ इत्युक्तोभीमसेनस्तुस्नेहभंगभयात्ततः ॥ नोवाचकिंचिद्वचनंस्वाभिप्रेतम
वाप्यच ॥१२२॥ अभिप्रायोहिभीमस्यनिश्चयेनत्रयोदशे ॥ युधिष्ठिरस्यराज्यार्थंगमनार्थेप्रतिश्रवः ॥१२३॥
अन्यथाऽतिमृदुत्वात्सनगच्छेद्भिन्नधीःपरैः ॥ कृतकृत्येतदाभीमेस्थितेधर्मात्मजोहिसः ॥१२४॥ भीष्मद्रोणा
दिविजयःकथंस्यादितिचिंतयन् ॥ निवारणंगुरूणांहिभीमइच्छतिनक्वचित् ॥१२५॥ तस्मात्तेह्यर्जुनेनैवनि
वार्याइत्यचिंतयत् ॥ आपद्येवहिभीमस्तान्निवारयतिनान्यथा ॥ १२६ ॥ एवंचिंतासमाविष्टंविज्ञायैवयुधि
ष्ठिरं ॥ सर्वज्ञःसर्वशक्तिश्चकृष्णद्वैपायनोऽगमत् ॥ नृपतिंबोधयामासचिंताव्याकुलमानसं ॥१२७॥ इमंमं
त्रंवदिष्यामियेनजेष्यतिफल्गुनः ॥ भीष्मद्रोणादिकान्सर्वांस्तंत्वंवदधनंजये ॥ १२८ ॥ इत्युक्त्वैवावदन्मं
त्रंसर्वदैवतदृष्टिदं ॥ नस्वयंह्यवदत्पार्थेफलाधिक्यंयतोभवेत् ॥ १२९ ॥ भीष्मद्रोणादिविजयएतावद्वीर्यमे
वहि ॥ अलंनातोधिकंकार्यमेतावद्योग्यमस्यच ॥ फल्गुनस्येतिभगवान्नस्वयंह्यवदन्मनुं ॥ १३० ॥ गते
व्यासेभगवतिसर्वज्ञेसर्वकर्तरि ॥ धर्मराजोवदन्मंत्रंफल्गुनायरहस्यमुं ॥ १३१ ॥ तमाप्यफल्गुनोमंत्रंययौ
ज्येष्ठौप्रणम्यच ॥ यमजौचसमाश्लिष्यगिरिमेवेंद्रकीलकं ॥ १३२ ॥ तपश्चचारतत्रस्थःशंकरस्थंहरिंस्म

रन् ॥ षण्मासेऽतिगतेऽपश्यन्मूकंनामासुरंगिरौ ॥ १३३ ॥ वराहरूपमायातंवधार्थंफल्गुनस्यच ॥ तं
ज्ञात्वाफल्गुनोवीरःसज्जंकृत्वाचगांडिवं ॥ चिक्षेपवज्रसमितांस्तत्कायेसायकान्बहून् ॥ १३४ ॥ किरात
रूपस्तमनुसभार्यश्चत्रियंबकः ॥ सममारहतस्ताभ्यांदानवःपापचेतनः ॥ १३५ ॥ तेनोक्तोसौमयैवायं
वराहोऽनुगतोद्यहि ॥ तमविध्योयतस्त्वंहितद्युध्यस्वमयासह ॥ १३६॥ इत्युक्तःफल्गुनःप्राहतिष्ठतिष्ठनमो
क्ष्यसे ॥इत्युक्त्वातावुभौयुद्धंचक्रतुःपुरुषर्षभौ ॥१३७॥ तत्राखिलानिशस्त्राणिफल्गुनस्याग्रसच्छिवः ॥ ततो
र्जुनस्तुगांडीवंसमादायाभ्यताडयत् ॥१३८॥ तदप्यग्रसदेवासौप्रहसन्गिरिशस्तदा ॥ बाहुयुद्धंततस्त्वासी
त्तयोःपुरुषसिंहयोः ॥१३९॥ पिंडीकृत्यततोरुद्रश्चिक्षेपचधनंजयं ॥ मूर्च्छामवापमहतींफल्गुनोरुद्रपीडितः
॥१४०॥ पूर्वंसंप्रार्थयामासशंकरोगरुडध्वजं॥अवराणांवरंमत्तोयेषांत्वंसंप्रयच्छसि ॥ अजेयत्वंप्रसादात्तेवि
जेयाःस्युर्मयापिते ॥१४१॥ इत्युक्तःप्रददौविष्णुरुमाधीशायतंवरं ॥ तेनाजयच्छ्वेतवाहंगिरिशोरणमध्यगं
॥१४२॥ केवलान्वैष्णवान्मंत्रान्व्यासःपार्थायनोददौ ॥ एतावतालंभीष्मादेर्जयार्थमितिचिद्घनः ॥१४३॥ के
वलैर्वैष्णवैर्मंत्रैःस्वदत्तैर्विजयावहैः ॥ अतिवृद्धस्यपार्थस्यदर्पःस्यादितिचिंतयन् ॥१४४॥ पार्थःसंज्ञामवाप्याथ

जयार्थ्याराधयच्छिवं॥व्यासोदितेनमंत्रेणतानिपुष्पाणितच्छिरः॥१४५॥आरुहन्सतुतंज्ञात्वारुद्रइत्येवफल्गु
नः॥ नमश्चक्रेततःप्रादादस्त्रंपाशुपतंशिवः ॥१४६॥ अस्त्रंतद्विष्णुदैवत्यंसाधितंशंकरेणयत्॥तस्मात्पाशुपतं
नामस्वान्यस्त्राण्यपरेसुराः॥ददुस्तदैवपार्थायसर्वेप्रत्यक्षगोचराः ॥१४७॥ इंद्रोर्जुनंसमागम्यप्राहप्रीतोस्मिते
ऽनघ ॥१४८॥ रुद्रदेहस्थितंब्रह्मविष्ण्वाख्यंतोषितंत्वया ॥ तेनलोकंममागच्छप्रेषयामिरथंतव ॥ १४९ ॥
इत्युक्त्वाप्रययाविंद्रस्तद्रथेनैवमातलिः॥ आयात्पार्थस्तमारुह्यययौताततनिकेतनं ॥१५०॥पूजितोदैवतैःसर्वै
रिंद्रेणाभिनिवेशितः ॥ तेनसार्धमुपासीदत्तस्मिन्नैंद्रेवरासने ॥१५१॥ प्रीत्यासमाश्लिष्यकुरुप्रवीरंशक्रोद्वितीयं
यांतनुमात्मनःसः ॥ ईक्षन्मुखंतस्यमुमोदसोपिह्युवासतस्मिन्वत्सरान्पंचलोके ॥१५२॥ अस्त्राणितस्माअदि
शच्चवासवोमहांतिदिव्यानितदोर्वशीतं॥संप्राप्यभावेनतुमानुषेणमाताकुलस्येतिनिवारिताभूत् ॥१५३॥ षं
डोभवेत्येवतयाभिशप्तेपार्थेशक्रोनुग्रहंतस्यचादात्॥संवत्सरंषंडरूपीचरस्वनषंडतातेभवतीतिधृष्णुः ।१५४।
ततोवसत्पांडवेयोगांधर्ववेदमभ्यसन् ॥ गंधर्वाच्चित्रसेनात्तुतथास्त्राणिसुरेश्वरात् ॥१५५॥ सुभद्रयाभिमन्यु
नासहस्वकांपुरींगतः॥ जनार्दनोत्रसंवसन्कदाचिदित्थमैक्षत ॥ १५६ ॥ मयावरोहिशंभवेप्रदत्तआसपूर्व

तः ॥ वरंगृहीष्यएवतेसकाशतोविमोहयन् ॥ १५७॥ त्वामाराध्यतथाशंभोग्रहीष्यामिवरंसदा ॥ द्वापरा
दौयुगेभूत्वाकलयामानुषादिषु ॥ १५८ ॥ स्वागमैःकल्पितैस्त्वंचजनान्मद्विमुखान्कुरु ॥ मांचगोपययेन
स्यात्सृष्टिरेषोत्तराधरा॥१५९॥ इतिवाक्यमृतंकर्तुमभिप्रायंविजज्ञुषी ॥ प्रीत्यर्थंवासुदेवस्यरुक्मिणीवाक्य
मब्रवीत् ॥१६०॥ जातेपिपुत्रेपुत्रार्थंसाहिवेदमनोगतं ॥ पुत्रोमेबलवान्देवस्यात्सर्वास्त्रविदुत्तमः ॥ १६१ ॥
इत्युक्तोभगवान्देव्यासंमोहायसुरद्विषां ॥ ययौसुपर्णमारुह्यस्वीयंबदरिकाश्रमं ॥ १६२॥ एषमोहंसृजाम्या
शुयोजनान्मोहयिष्यति ॥ त्वंचरुद्रमहाबाहोमोहशास्त्राणिकारय ॥१६३॥ अतथ्यानिवितथ्यानिदर्शय
स्वमहाभुज ॥ प्रकाशंकुरुचात्मानमप्रकाशंचमांकुरु॥१६४॥ अहं त्वांपूजयिष्यामिलोकसंमोहनोत्सुकः॥
तमोसुरानान्यथाहियांतीत्येतन्मतंमम ॥१६५॥ इत्युक्तंवचनंपूर्वंकेशवेनशिवाययत् ॥ तत्सत्यंकर्तुमायां
तंकृष्णंबदरिकाश्रमं ॥ सर्वज्ञामुनयःसर्वेपूजयांचक्रिरेप्रभुं ॥ १६६ ॥ रात्रौकृष्णेमुनिमध्येप्रविष्टेघंटाकर्णः
कर्णनामापिशाचौ ॥ समायातांगिरिशेनप्रदिष्टौकृष्णंद्रष्टुंद्वारकांगंतुकामौ ॥१६७॥ तौदृष्ट्वामुनिमध्यस्थं ॥१०८९॥
केशवंतदबोधतः ॥ कृत्वास्वजातिचेष्टाश्चध्यानेनैनमपश्यतां ॥ १६८ ॥ दृष्ट्वाहृदिस्थितंतौतुकौतूहलसम

न्वितौ ॥ स्तुत्वाभक्त्याप्रणामंचबहुशश्चक्रतुःशुभौ ॥ १६९ ॥ तयोःप्रसन्नोभगवान्स्पृष्ट्वागंधर्वसत्तमौ ॥ चकारक्षणमात्रेणदिव्यरूपस्वरान्वितौ ॥ १७०॥ ताभ्यांपुनर्नृत्तगीतसंस्तवैःपूजितःप्रभुः ॥ ययौकैलासमद्रीशंचकारैवतपोत्रच ॥१७१॥ स्वीयानेवगुणान्विष्णुर्भुंजन्नित्येनशोचिषा ॥ शार्वंतपःकरोतीवमोहयामासदुर्जनान्॥१७२॥पूर्वंतेनोदितंयत्तल्लोकान्मोहयतांजसा ॥ शर्वंप्रतितवाहंतुकुर्याद्द्वादशवत्सरं ॥१७३॥ तपोसुराणांमोहायसुराःसंतुगतज्वराः ॥ इतितस्मात्तदाकृष्णएकाहेनबृहस्पतिं ॥ १७४ ॥ स्वाज्ञयाचारयामासक्षिप्रंद्वादशराशिषु॥ द्वादशाब्दमभूत्तेनतदहःकेशवाज्ञया ॥ १७५ ॥ एकस्मिन्नह्निभयवान्राशिंराशिंचवत्सरं ॥ कल्पयित्वोपवासादीन्मनसानियमानपि ॥१७६॥ मासव्रतंसार्धशतश्वासकालैरकल्पयत्॥ मनसैवस्वभक्तानांद्वादशाब्दव्रतासये ॥ १७७॥ तत्रास्यगरुडाद्यास्तुपरिचर्यांस्वपार्षदाः ॥ चक्रुर्होमादिकाश्चैवक्रियाश्चक्रेजनार्दनः ॥ स्वात्मानंप्रतिपापानांशिवायेतिप्रकाशयन् ॥१७८॥ एवंस्थितंतमरविंददलायताक्षंब्रह्मेंद्रपूर्वसुरयोगिवरप्रजेशाः॥ अभ्याययुःपितृमुनींद्रगणैःसमेतागंधर्वसिद्धवरयक्षविहंगमाद्याः ॥ १७९ ॥ शर्वोपिसर्वसुरदैवतमात्मदैवमायांतमात्मगृहसन्निधिमाश्ववेत्य ॥ अभ्याययौनिजगणैःसहितः

सभार्योभक्त्यातिसंभ्रमगृहीतसमर्हणार्घ्यः ॥ १८० ॥ अभ्येत्यपादयुगलंजगदेकभर्तुःकृष्णस्यभक्तिभरितः
शिरसाननाम ॥ चक्रेस्तुतिंचपरमांपरमस्यपूर्णषाड्गुण्यविग्रहविदोषमहाविभूतेः ॥ १८१ ॥ कृष्णोप्ययोग्य
जनमोहनमेववांछंस्तुष्टावरुद्रहृदिगंनिजमेवरूपं ॥ रुद्रोनिशम्यतदुवाचसुरान्समस्तान्सत्यंवदामिशृणुताद्य
वचोमदीयं ॥ १८२ ॥ विष्णुःसमस्तसुजनैःपरमोभ्युपेयस्तत्प्राप्तयेहमनिलोथरमाभ्युपेयाः ॥ एषह्यशेषनि
गमार्थविनिर्णयोर्थोयद्विष्णुरेवपरमोममचाब्जयोनेः ॥ १८३ ॥ अव्यक्ततःसकलजीवगणाच्चनित्यमित्येवनि
श्चयउतैतदनुस्मरध्वं ॥ इत्युक्तवत्यखिलदेवगणागिरीशेकृष्णंप्रणेमुरतिवृद्धरमेशभक्त्या ॥१८४॥ उक्तैरन्यै
श्चगिरिशवाक्यैस्तत्त्वविनिर्णयैः॥कृष्णस्यैवगुणाख्यानैःपुनरिंद्रादिदेवताः ॥१८५॥ ज्ञानाभिवृद्धिमगमन्पु
रापिज्ञानिनोधिकं ॥१८६॥ सर्वदेवोत्तमंतंहिजानंत्येवसुराःसदा ॥ तथापितत्प्रमाणानांबहुत्वाद्यत्रसंशयाः
॥ १८७ ॥ युक्तिमात्रात्तेपिरुद्रवाक्यादपगतास्तदा ॥ १८८ ॥ ततःकृष्णःसुतवरंत्वत्तआदास्यइत्यजः ॥
यदुक्तवाञ्छिवंपूर्वंसत्यंकर्तुंतदब्रवीत् ॥१८९॥ पुत्रंदेहीतिसोप्याहपूर्वमेवसुतस्तव ॥ जातःप्रद्युम्ननामायः
समद्दत्तःप्रवादतः ॥ १९० ॥ पुरादग्धोमयाकामस्तदायाचतमांरतिः ॥ देहिकांतंममेत्येवतदातामहमब्रुवं


॥१०९०॥

॥ १९१ ॥ उत्पत्स्यतेवासुदेवाद्यदात्वंपतिमाप्स्यसि ॥ इत्यतोसौमयादत्तइवदेवत्वदाज्ञया ॥ १९२ ॥ दा
सोस्मितवदेवेशपाहिमांशरणागतं ॥ इत्युक्त्वाभिप्रणम्यैनंपुनराहसुरान्हरः ॥१९३॥ यदर्थमेषआयातःके
शवःशृणुतामराः ॥१९४॥ योसुरोवक्रनामासीदवध्योब्रह्मणोवरात् ॥ तदाजाताद्वासुदेवपुत्रात्कामादृते
क्वचित् ॥ १९५॥ तंहंतुमेवपुत्रंस्वंप्रद्युम्नमुदरेप्यथच ॥ आयातइहतंचापिददाहस्वोदरात्सुतं ॥ निःसारयि
त्वाकक्षंचदग्धंपश्यतदेवताः ॥१९६॥ ज्वालामालाकरालेनस्वतेजोवर्धितेनच ॥ प्रद्युम्नेनैवतंदैत्यंदग्ध्वाव
नसमन्वितं ॥ पुनश्चस्वोदरेपुत्रंस्थापयामासकेशवः ॥१९७॥ सद्योगर्भंपुनस्तंचरुक्मिण्यांजनयिष्यति ॥
पूर्ववत्क्षणमात्रेणयुवाचसभविष्यति ॥ १९८ ॥ दृष्टमेतन्नारदाद्यैर्मुनिभिःसर्वमेवच ॥ १९९ ॥ एवंक्रीड
त्ययंदेवःपूर्णैश्वर्येणकेवलं ॥ इत्युक्तेकेशवंनेमुर्देवाःशक्रपुरोगमाः ॥२००॥ ततोहरिर्ब्रह्मसुरेंद्रमुख्यैःसुरैःस्तु
तोगरुडस्कंधसंस्थः ॥ पुनःपुनःप्रणतःशंकरेणस्तुतस्तृतीयेह्निनिजांपुरीमगात् ॥२०१॥ कृष्णेप्रयातेनिल
यंपुरद्विषोरात्रौपौंड्रोवासुदेवःसमागात्॥सहैकलव्येननिजेनमातुःपित्रातथाक्षौहिणीकत्रयेण ॥२०२॥ पुरीं
प्रभंजंतममुंविदित्वासरामशैनेययदुप्रवीराः॥संयोधयामासुरथाभ्यवर्षञ्छरैर्निषादाधिपएकलव्यः ॥२०३॥

तदस्त्रशस्त्रैःसहसाविषण्णायदुप्रवीराविगतप्रदीपाः ॥ सहैवरामेणशिनेश्चनप्त्रासमाविशन्स्वांपुरमेवसर्वे
॥ २०४ ॥ पुनःसमादायतथोरुदीपिकाअग्रेसमाधायचरौहिणेयं ॥ विनिःसृताआत्तशस्त्राःस्वपुर्याःसिं
हायथाधर्षिताःसद्गुहायाः ॥ २०५ ॥ अथाससादैकलव्यंरथेनरामःशैनेयःपौंड्रकंवासुदेवं ॥ अयुध्यतांतौ
सात्यकिःपौंड्रकश्चतथान्योन्यंविरथंचक्रतुश्च ॥२०६॥ ततोगदायुद्धमभूत्तयोर्द्वयोस्तथारामश्चैकलव्यश्चवी
रौ ॥ कृत्वान्योन्यंविरथंतौगदाभ्यामयुध्यतांजातदर्पौबलाढ्यौ ॥२०७॥ तस्मिन्कालेकेशवोवैनतेयमारु
ह्यायाद्यत्रतेयुद्धसंस्थाः ॥ दृष्ट्वाकृष्णंहर्षसंपूरितात्मारामोहंतुंचैकलव्यंसमैच्छत् ॥२०८॥ उद्यम्यदोर्भ्यांसग
दांजवेनयदापतद्रौहिणेयोनिषादं ॥ बलंकोपंचास्यदृष्ट्वैकलव्यःपराद्रवज्जीवितेच्छुःसुदूरं ॥ २०९ ॥
विद्रावयन्रौहिणेयोन्वयात्तंभीतोपतच्चैकलव्योंबुधौसः ॥ वेलांतंतंद्रावयित्वात्रतस्थौरामोगदापाणिरदीनस
त्त्वः ॥२१०॥ सुपापोसावेकलव्यःसुभीतोरामंमत्वैवानुयांतंपुनश्च ॥ समुद्रेशीतिंयोजनानामतीत्यपश्चादे
क्षद्वीपमेवाधिरुह्य ॥ २११ ॥ रामोविजित्यातिबलंरणेरिपुंमुदैवदामोदरमाससाद ॥ पौंड्रस्त्ववज्ञायशिनिप्र ॥१०९१॥
वीरंनिवार्यमाणोभिययौजनार्दनं ॥२१२॥ तंकेशवोविरथंव्यायुधंचक्षणेनचक्रेसययौनिजांपुरीं ॥ प्रस्था

पयामासपुनश्चदूतंकृष्णायैकोवासुदेवोहमस्मि ॥ २१३ ॥ मदीयलिंगानिविसृज्यचाशुसमागच्छेथाःशरणं
मामनंतं ॥ तद्दूतोक्तंवाक्यमेतन्निशम्ययदुप्रवीराउच्चकैःप्राहसन्स ॥२१४॥ कृष्णःप्रहस्याहतवायुधानिदा
तास्म्यहंलिंगभूतानिचाजौ॥इत्युक्तोसौदूतएत्याहतस्मैसचाभ्यगाद्योद्धुकामोहरिश्च ॥२१५॥ तंशातकौंभे
गरुडेरथस्थेस्थितंचक्रादीन्कृत्रिमान्संदधानं॥श्रीवत्सार्थंदग्धवक्षस्थलंचदृष्ट्वाकृष्णःप्राहसत्पापबुद्धिं॥२१६॥
ततोस्त्रशस्त्राण्यभिवर्षमाणंविजित्यतंवासुदेवोरिणैव॥चकर्ततत्कंधरंतस्यचानुमातामहस्याच्छिनत्सायकेन
॥२१७॥ अपातयच्चाशुशिरःसतेनकाशीश्वरस्येश्वरोवारणास्यां ॥ सचब्रह्माहंवासुदेवोस्मिनित्यमितिज्ञा
नादगमत्तत्तमोंधं ॥२१८॥साहाय्यकृच्चास्यचकाशिराजोयथैवकिर्मीरहिडिंबसाल्वाः॥अन्येचदैत्याअपतंस्त
मोंधंतथैवसोप्यपतत्पापबुद्धिः ॥२१९॥ निहत्यतौकेशवोरौक्मिणेयंपुनर्वैदर्भ्यांजनयामाससद्यः ॥ सचैक
लव्योरामजितःशिवायचक्रेतपोजेयतांचापतस्मात् ॥२२०॥ सशर्वदत्तेनवरेणदृप्तःपुनर्योद्धुंकृष्णमेवाससा
द ॥ तस्यास्त्रशस्त्राणिनिवार्यकेशवश्चक्रेणचक्रेतमपास्तकंधरं ॥ २२१ ॥ सचापपापस्तमएवघोरंकृष्णद्वेषा
न्नित्यदुःखात्मकंतत् ॥ एवंयदूनामृषभेणसूदितेपौंड्रेतथाकाशिराजेचपापे ॥२२२॥ काशीशपुत्रस्तुसुदक्षि

णाख्यस्तपोचरच्छंकरायोरुभक्त्या ॥ प्रत्यक्षगंतंशिवंपापबुद्धिःकृष्णाभावंयाचतेदुष्टचेताः ॥२२३॥ कृत्या
मस्मैदक्षिणाग्नौशिवोपिदैत्यावेशाददादावृतात्मा॥२२४॥सदक्षिणाग्निश्चासुरावेशयुक्तःसंपूजितःकाशिरा
जात्मजेन ॥ वरादुमेशस्यविवृद्धशक्तिर्ययौकृष्णोयत्रसंपूर्णशक्तिः ॥२२५॥ कृष्णस्तस्यप्रतिघातार्थमुग्रंस
मादिशच्चक्रमनंतवीर्यः॥जाज्वल्यमानंतदमोघवीर्यंव्यद्रावयद्वह्निमिमंसुदूरं ॥२२६॥ कृत्यात्मकोवह्निरसौप्र
धानवह्नेःपुत्रश्चक्रविद्रावितोथ ॥ सहानुबंधंचसुदक्षिणंतंभस्मीचकाराशुसपुत्रभार्यं॥२२७॥ दग्ध्वापुरींवा
रणासींसुदर्शनंपुनःपार्श्वंवासुदेवस्यचागात् ॥ सुदक्षिणोसौतमएवजग्मिवान्कृष्णद्वेषात्सानुबंधःसुपापः
॥२२८॥ कृष्णःक्रीडन्द्वारवत्यांसुपूर्णनित्यानंदःक्वचिदाहस्मभैष्मीं ॥ विडंबयन्गृहिणामेवचेष्टानित्याविरो
धोपितयाविदोषया ॥२२९॥ त्वयानकार्यंममकिंचभद्रेमयारीणांमानभंगार्थमेव ॥ समाहृतासीतिसाचा
वियोगंसदाकृष्णेनात्मनोप्येववेत्री ॥ २३० ॥ स्त्रियाभेतव्यंभर्तुरित्येवधर्मंविज्ञापयंतीदुःखितेवासदेवी ॥
तांसांत्वयामासगृहस्थधर्मंविज्ञापयन्देवदेवोप्यदुःखां ॥२३१॥ एवंक्रीडत्यब्जनाभेरमायांकृष्णादिष्टोगोकुलं
रौहिणेयः॥ प्रायाद्दृष्ट्वातत्रनंदंयशोदांतत्पूजितःकृष्णवार्तांचपृष्टः ॥ २३२ ॥ मासौतत्रन्यवसद्गोपिकाभीरे

मेक्षीबोयमुनामाह्वयच्च ॥ मत्तोयमित्येवनदीमनागतांचकर्षरामोलांगलेनाग्र्यवीर्यः ॥ २३३ ॥ पुनस्तयाप्र
णतःसंस्तुतश्चव्यसर्जयत्तामथनंदगोपं॥आपृच्छ्यचागाद्द्वारकांकेशवायन्यवेदयन्नंदगोपादिभक्तिं ॥२३४॥
तदैवमैंदोविविदश्चभौमेहतेसखायेदानवावेशयुक्तौ ॥आनर्तराष्ट्रंवासुदेवप्रतीपौव्यनाशयेतांवासुदेवोथचो
चे ॥२३५॥ रामायसोदाद्धरमञ्जनाभोवध्यावेतौभवतांतिष्यवध्यौ ॥ वराद्विरिंचस्यतथामृताशनादुभौचमैं
दोविविदोव्रजेति ॥२३६॥ गत्वासमैंदंप्रथमंजघानक्रोधाद्युद्धायागतंरैवताग्रे ॥ दिनेपरस्मिन्विविदंजघा
नशिलावर्षंतंमुसलेनाग्र्यकर्मा ॥२३७॥ तयोराविष्टौतावसुरौतमोंधंप्राप्तौचतावश्विनौस्वंचलोकं ॥२३८॥
दुर्योधनस्यासपुत्रीरतिर्यापूर्वंनाम्नालक्षणाकांतरूपा ॥ स्वयंवरस्थांतांबलादेवसांबोजग्राहसाचैनमासानुर
क्ता॥२३९॥बलाद्गृहीतांवीक्ष्यतांकर्णमुख्यादुर्योधनाद्यायुयुधुःक्रोधदीप्ताः॥कृच्छ्रेणतंविरथीकृत्यचैकंसर्वेस
मेताजगृहुर्धार्तराष्ट्राः ॥ कर्णेनभूरिश्रवसाचसार्धंबाह्वोर्बलादेवदुर्योधनस्य ॥२४०॥ श्रुत्वैवतद्वृष्णयःसर्वए
वसमुद्यमंचक्रिरेकौरवेषु ॥ निवार्यतान्बलभद्रःस्वयंययौसहोद्धवःकौरवेयान्छमार्थी ॥२४१॥ पुरस्यबाह्यो
पवनेस्थितःसम्प्रास्थापयच्चोद्धवंकौरवार्थे ॥ आगत्यसर्वेकुरवोस्यपूजांचक्रुःसचाहोग्रसेनस्यचाज्ञां ॥ २४२ ॥

आज्ञापयद्धोनृपतिःस्वयंनःकुमारकःप्रगृहीतोभवद्भिः ॥ एकःसमेतैर्बहुभिर्बांधवार्थक्षांतंतन्नोमुंचताश्वेवसां
वं॥२४३॥ आज्ञापयामासचउग्रसेनइत्युक्तमेवतुनिशम्यकुरुप्रवीराः॥ संश्राव्यदुष्टवचनानिबलंपुरंस्वंक्रोधा
त्समाविविशुरत्रचुकोपरामः ॥ २४४ ॥ स्वलांगलेनतत्पुरंविकृष्यजाह्नवीजले ॥ निपातयन्निवारितःप्रण
म्यसर्वकौरवैः ॥ २४५ ॥ सभार्यमाशुपुत्रकंसुयोधनाभिपूजितं ॥ सपारिबर्हमाप्यचप्रजग्मिवान्स्वकंपुरं
॥ २४६ ॥ इत्यादिकर्माणिमहांतिरामस्यासञ्छेषस्याच्युतावेशिनोलं ॥ यस्याच्युतावेशविशेषकालंज्ञात्वा
भीमोप्यस्यनोदेतियुद्धे ॥ २४७ ॥ क्रीडायुद्धेबहुशोरौहिणेयेव्यक्तिंविष्णोर्भीमसेनोविदित्वा ॥ तात्कालि
कींपीड्यमानोपितेननैवोद्यमंकुरुतेविष्णुभक्त्या ॥ २४८ ॥ तदाजयीप्रभवत्येषरामोनातिव्यक्तस्तत्रयदाज
नार्दनः ॥ तदाभीमोविजयीस्यात्सदैवविष्णोःकेशावेशवान्यत्सरामः ॥२४९॥ एतादृशेनैवरामेणयुक्तेकृ
ष्णेद्वार्वत्यांनिवसत्यब्जनाभे ॥ स्वप्नेऽनिरुद्धेनरताकदाचिद्बाणात्मजोषाचित्रलेखामुवाच ॥ २५० ॥ तमा
नयेत्यथसाचित्रवस्त्रेप्रदर्श्यलोकान्समदर्शयत्तं ॥ पौत्रंविदित्वावचनाच्चतस्याःकृष्णस्यतंचानयत्तत्ररात्रौ
॥ २५१ ॥ अनिरुद्धंगुणोदारमानीतंचित्रलेखया ॥ प्राप्यरेमेबाणसुतादिवसान्सुबहूनपि ॥२५२॥ गूढंक

न्यागृहेतंतुज्ञात्वाकन्याभिरक्षिणः ॥ ऊचुर्बाणायादिशच्चकिंकरान्ग्रहणेस्यसः ॥२५३॥ आगताननिरुद्ध
स्तान्परिघेणमहाबलः ॥ निहत्यद्रावयामासस्वयमायात्ततोसुरः ॥२५४॥ सतुयुद्धातिकृच्छ्रेणनागास्त्रेणब
बंधतं ॥ २५५ ॥ अथकृष्णःसमारुह्यगरुडंरामसंयुतः ॥ प्रद्युम्नेनचतत्रागात्प्रथमंतत्रवह्निभिः ॥२५६॥ यु
द्धेवांगिरसाचैवक्षणाद्विद्राव्यतान्हरिः ॥ विद्राव्यशर्वप्रमथानाससादज्वरंततः ॥ २५७ ॥ तेनभस्मप्रहारेण
ज्वरितंरोहिणीसुतं ॥ आश्लिष्यविज्वरंचक्रेवासुदेवोजगत्प्रभुः ॥२५८॥ स्वयंविक्रीड्यतेनाथकंचित्कालं
जनार्दनः ॥ निष्पिष्यमुष्टिभिश्चान्यंससर्जज्वरमच्युतः ॥ २५९ ॥ स्वयंजित्वापिगिरिशभृत्यंनालमितिप्र
भुः ॥ स्वभृत्येनैवजेतव्यइत्यन्यंससृजेतदा ॥ ज्वरेणवैष्णवेनासौसुभृशंपीडितस्तदा ॥२६०॥ ग्रासार्थमुपनी
तश्चजगामशरणंहरिं ॥ तेनस्तुतःसभगवान्मोचयामासतंप्रभुः ॥२६१॥ क्रीडार्थमत्यल्पजनेष्वपिप्रभुःकथं
चिदेवव्यजयद्व्यथांविना ॥ इत्यादिमोहायसदर्शयत्यजोनित्यस्वतंत्रस्यकुतोव्यथादयः ॥२६२॥ यदाज्वराद्या
अखिलाःप्रविद्रुतास्तदास्वयंप्रापहरिंगिरीशः ॥ तयोरभूद्युद्धमथैनमच्युतोविजृंभयामासविजृंभणास्त्रतः
॥२६३॥ विजृंभितेशंकरेनिष्प्रयत्नेस्थाणूपमेसंस्थितेकंजजातः ॥ दैत्यावेशाद्वासुदेवानभिज्ञंसंबोधयामास

मादायसमंताच्छतयोजनं ॥ ददौतेषांतेपिचोहुर्हस्त्यश्वोष्ट्रनरादिभिः ॥ ८५॥ युधिष्ठिरमृतेसर्वेभीमसेनपु
रोगमाः ॥ यज्ञार्थमूहिरेभूरिस्वर्णमुद्यद्रविप्रभं ॥ ८६ ॥ तदैववासुदेवोपिसभार्यःससुभद्रया ॥ आगच्छ
द्धस्तिनपुरंपथ्युदंकेनपूजितः ॥ ८७॥ तत्कामवर्षिणोमेघांस्तस्यदत्वोदकार्थिनः ॥ सफलंस्ववरंकृत्वाज
गामगजसाह्वयं ॥ ८८ ॥ आसन्नेष्वेवपार्थेषुव्यासेचपुरुषोत्तमे ॥ प्रविवेशपुरंकृष्णस्तदाऽसूतोत्तरामृतं
॥८९॥ द्रौण्यस्त्रसूदितंबालंदृष्ट्वाकुंत्यादिकाःस्त्रियः ॥ शरण्यंशरणंजग्मुर्वासुदेवंजगत्पतिं ॥ ९० ॥ प्रत्य
क्षमात्मनागर्भेरक्षितंप्रसवेहतं॥ पुनरुज्जीवयामासकेशवःपार्थतंतवे ॥९१॥ तदैवविविशुःपार्थाःसकृष्णाःस
धनोच्चयाः ॥ सर्वेमुमुदिरे दृष्ट्वापौत्रंकेशवरक्षितं ॥ ९२ ॥ ददौदानानिबहुशोधर्मपुत्रोयुधिष्ठिरः ॥ पौत्रज
न्मनिहृष्टात्मावासुदेवंन नामच ॥९३॥ कुंतीकृष्णासुभद्राभिर्वैराव्यादिभिरेवच ॥ पांडवैःपुरुषैरन्यैःसंस्तुतः
प्रणतोहरिः ॥९४॥ ततःकृष्णाभ्यनुज्ञाताःपाराशर्यसदस्यकाः ॥ आरेभिरेऽश्वमेधंतेमुनिभिर्ब्रह्मवादिभिः
॥९५॥ सर्वयज्ञात्मकंतेषामश्वमेधंजगत्पतिः ॥ कारयामासभगवान्कृष्णद्वैपायनःस्वयं ॥ ९६ ॥ साधना ॥११५७॥
निचसर्वाणिशालांचैवहिरण्मयीं ॥ पवमानसुतश्चक्रेकृष्णद्वैपायनेरितः ॥९७॥ अथानुमंत्रितोत्सृष्टंपुरो

हितपुरस्कृतं ॥ तुरंगंकृष्णसारंगमनुवव्राजवासविः ॥९८॥ सजित्वारुंधतःसर्वान्नृपतीञ्छस्त्रतेजसा ॥ चारयामाससर्वेषुराष्ट्रेष्वविजितोरिभिः ॥९९॥ युधिष्ठिराज्ञयातेननकश्चिन्निहतस्तदा ॥ आहूताश्चनृपास्तेनयज्ञार्थंप्रीयताखिलाः ॥ १०० ॥ मळलूरंक्रमात्प्राप्तस्तत्रैनंबभ्रुवाहनः ॥ अभ्ययादर्घ्यपाद्याद्यैस्तमाहविजयःसुतं ॥ १०१ ॥ योद्धुकामोर्घ्यमादायत्वयाद्याभिगतोह्यहं ॥ नप्रीयेपौरुषंधिक्तेयन्मेध्याश्वोनवारितः ॥१०२॥ तदापिपितृभक्त्यैनमयुध्यंतमुलूपिका ॥ आहयुध्यस्वतत्प्रीत्यैगुरोःकार्यमसंशयं ॥ १०३ ॥ प्रीणनायैवयुध्यस्वपित्रेसंदर्शयन्बलं ॥ इत्युक्तोयुयुधेपित्राबलंसर्वंप्रदर्शयन् ॥१०४॥ अर्जुनस्तुसुतस्नेहान्मंदंयोधयतिस्मयन् ॥ सतुसर्वायुधक्षेपेप्यविकारंधनंजयं ॥१०५॥ दृष्ट्वाबाल्यात्परीक्षायैमंत्रपूतंमहाशरं ॥ चिक्षेपपित्रेदैवेनतेनैनंमोहआविशत् ॥१०६॥ मूर्च्छितंतंगुरुंदृष्ट्वातद्भक्त्याभृशदुःखितः ॥ प्रायोपविष्टस्तन्माताविललापातिदुःखिता ॥१०७॥ विजगर्हतदोलूपींधिग्जगत्त्रयपूजितं ॥ अजीघनोमेभर्तारंपुत्रेणैवाविजानता ॥ १०८ ॥ लोकवीरंपतिंहत्वानमेकार्यंसुतेनच ॥ पतिलोकमहंयास्येतृप्ताभवकलिप्रिये ॥१०९॥ इत्युक्त्वामरणायैवतांविनिश्चितमानसां ॥ धरायांविलुठंतींचदृष्ट्वाभुजगनंदिनी ॥ ११० ॥ ना

 गलोकात्समादायविशल्यकरणीं क्षणात् ॥ उत्थापयामासपतिंत्रिलोकातिरथंतया ॥ १११ ॥ प्रहस्योवाच 
 चतदाश्रुतंवाक्यंपुरामया ॥ सुरलोकेसुरैःप्रोक्तंभीष्माद्यानातिधर्मतः ॥ यद्धतास्तेनदोषेणपार्थस्तेनातिवे
दनां ॥ ११२ ॥ रणेव्रजेदितिनतत्परतःस्यादितिह्यहं ॥ वचनादेवदेवानांयुध्येत्यात्मजमब्रुवं ॥ ११३ ॥ दे 
वानामेवसंकल्पान्मूर्च्छितश्चार्जुनोभवत् ॥ भुक्तदोषफलश्चायंपुनर्भोक्ष्यतिनान्यतः ॥११४॥ अन्येनपतित
स्यास्ययशोनश्येत्त्रिलोकगं ॥ नार्जुनस्ययशोनश्येदितिदेवैरिदंकृतं ॥ ११५ ॥ इत्युक्तःप्रीतिमापेदेपुत्रभा
र्यायुतोर्जुनः ॥ यज्ञार्थंतावथाहूयपूजितःप्रययौततः ॥११६॥ द्वारकायाःसमीपस्थंप्रद्युम्नाद्याःसुताहरेः ॥
प्रसह्याश्वमथाजह्रुराह्वयंतोर्जुनंयुधे ॥ ११७ ॥ सुभद्राहरणंमार्ष्टुंनीतेश्वेतैर्धनंजयः ॥ गौरवाद्वासुदेवस्यमा
तुलस्यचकेवलं ॥११८॥ मातुलायाब्रवीदश्वंहृतंपौत्रैरबंधुवत् ॥ सनिर्भर्त्स्यकुमारांस्तान्मेध्यमश्वममोचय
त् ॥११९॥ मातुलंसप्रणम्याथयज्ञार्थंतान्निमंत्र्यच ॥ गच्छन्गजाह्वयंदूतमग्रतोयातयन्नृपे ॥ १२० ॥ संक
र्षणःसहसोदर्यःश्रुत्वासौप्राप्तमर्जुनं॥प्रीतोबाष्पातिपूर्णाक्षोभ्रातृस्नेहादभाषत ॥१२१॥ वासुदेवनपश्यामिदु 
र्लक्षणमथार्जुने॥केनदुर्लक्षणेनायंबहुदुःखीप्रवासगः॥१२२॥पृष्टस्तंकेशवःप्राहभ्रातातेदीर्घपिंडिकः॥ तेना

यंदुःखबहुलइत्युक्त्वापुनरेवच॥१२३॥वदंतमेवंपांचालीकटाक्षेणन्यवारयत् ॥ समस्तलक्षणाभिज्ञाःकृष्णःस
त्यावृकोदरः॥१२४॥कृष्णाचपंचमोनास्तिविद्याशुद्धेयमंजसा ॥ प्रसंगात्प्राप्तुमिच्छेत्तांविद्याशीलोयुधिष्ठिरः
॥१२५॥इतिलोभात्तुपांचालीवासुदेवंन्यवारयत्॥१२६॥तद्गौरवाद्वासुदेवोनोत्तरंप्रत्यभाषत ॥ विस्मारयामा
सचतंप्रब्रुवाणःकथांतरं॥१२७॥उदरस्यकिंचिदाधिक्यंवृषणाधिक्यमेवच ॥सव्यबाहोस्तथाधिक्यंदुर्लक्षणम
थार्जुने॥१२८॥तन्नोक्तंवासुदेवेनदृश्यमानमपिस्फुटं॥ज्ञानानंदह्रासकराह्येतेदोषाःसनातनाः ॥१२९॥ सम
स्तजीवराशौतुदुर्लक्षणविवर्जितौ॥पूर्णचित्सुखशक्त्यादेर्योग्यौकृष्णाचमारुतिः॥१३०॥ अनादिदुःखहीन
त्वेसुखाधिक्येचलक्षणं॥रुक्मिणीसत्यभामादिरूपायाःश्रियएवतु॥१३१॥ मुख्यंततोतिमुख्यंतुस्वातंत्र्यादे
रशेषतः।गुणराशेःपरंलिंगंनित्यंव्यासादिरूपिणः॥विष्णोरेवनचान्यस्यसह्येकःपूर्णसद्गुणः।१३२॥साश्वेर्जुने
यज्ञवाटंप्रविष्टेस्यसहोदराः।पूजिताःपूजयामासुर्मुदिताःसहकेशवाः।१३३।ततःसयज्ञोयदुवीररक्षितोव्यासो
पदिष्टोमुनिभिःप्रवर्तितः।अशोभतालंसकलैर्नृपैश्चसमागतैर्विप्रवरैश्चजुष्टः ।१३४। सकृष्णयुग्मेनचभार्गवेण
त्रिधाविभक्तेनपरेणपुंसा॥अधिष्ठितोशोभतविश्वमेतद्विश्वादिरूपेणयथैवतेन॥१३५॥यथाविरिंचस्यपुरास

यज्ञोयथैवशक्रस्यशतक्रतुत्वे॥तथैवसोभूद्विधिशर्वशक्रपूर्वैःसुरैराविरलंकृतोधिकं॥१३६॥ नदेवगंधर्वमुनिः
स्वधर्ममर्त्यादिकेष्वाससयोत्रनास॥स्वलंकृतैर्नाकिजनैःसकांतैररूरुचन्नाकवदेतदोकः॥१३७॥ तत्रैवतत्त्वा
निससंशयानिनिःसंशयान्यासुरलंविवादे ॥ परस्परोत्थेहरिणात्रिरूपिणासंस्थापितान्यग्र्यवचोभिरुच्चैः
॥१३८॥ प्रगीतगंधर्ववरःप्रनृत्तसदप्सराःसंततवादिविप्रः॥ विवेचयद्देवनृपौघएकोरराजराजाखिलसत्कतू
नां॥१३९॥समस्तदेव्यःसहवासुदेव्यःस्वलंकृताःफुल्लमुखारविंदाः॥विचेरुरत्रैवसहाप्सरोभिर्निषेदुरप्यच्युत
सत्कथारमाः॥१४०॥न वैमुमुक्षुर्नबुभूषुरत्रनवैविवित्सुश्चकुतोबुभुक्षुः॥नासत्यकामाअभवन्कुतश्चित्प्रदात
रिप्राज्ञवरेऽनिलात्मजे ॥१४१॥ दिनेदिनेतत्रमहान्नपर्वताःसभक्षसारारसवंतऊर्जिताः ॥ नद्यःपयःसर्पिरज
स्रपूर्णाःसमाक्षिकाद्याअपिपायसह्रदाः ॥१४२॥ ह्रदामहांतस्त्रिदशादियोग्याःसुयोगयुक्ताहरिचंदनादेः ॥
तथांजनालक्तकमुख्यमंडनद्रव्याग्र्यवाप्योमणिकांचनोद्भवाः ॥ १४३ ॥ यथेष्टपानाशनभोगशिष्टाःसह
स्रशोमारुतिनापिकारिताः ॥ गंधारसाद्याश्चसमस्तभोगादिवीवतत्रासुरतीवहृद्याः ॥ १४४ ॥ नैतादृशः
कश्चनभूतपूर्वोमखोविनारामविरिंचवज्रिणां॥मखानितिप्रोचुरशेषलोकादृष्ट्वामखंतंपुरुषोत्तमेरितं॥१४५॥

सएवमद्धाहरिर्दैवतःक्रतुःपंचाश्वमेधात्मकउच्चकल्पः ।। दिनेदिनेस्वृद्धगुणोबभूवमुदावहोवत्सरपंचकत्रयं
।। १४६ ।। यज्ञावसानेनिखिलाश्चपांडवाःकृष्णाचपृथ्वीमखिलांसवित्तां ।। मांगल्यमात्रंदयिताशरीरेनि
धायसर्वाभरणानिचैव ।। १४७ ।। समर्पयामासुरजेवरेण्येव्यासेविभागाययथोक्तमृत्विजां ।। प्रियोविभा
गोयदमुष्यविष्णोरतोविभागार्थमिवार्पयंस्ते ।। १४८ ।। हृदासमस्तंहरयेर्पितंतैःसहिद्विजस्थोपिसमस्तक
र्ता ।। देहेंद्रियप्राणमनांसिचेतनैःसहैवतस्माअतिसृज्यनेमुः ।। १४९ ।। त्वदीयमेतन्निखिलंवयंचनत्वस्मदी
यंक्वचकिंचनेश ।। स्वतंत्रएकोसिनकश्चिदन्यःसर्वत्रपूर्णोसिसदेतिहृष्टाः ।। १५० ।। ततोविभक्तेमुनयोवदं
स्तेप्रत्यर्पयामोवयमेषुराज्यं ।। पूर्णाहिरण्येनवयंधरायाःप्रपालनेयोग्यतमाइमेहि ।।१५१।। पार्थाःसभार्या
द्विजवाक्यमेतन्निशम्यकृष्णायपुनःप्रणम्य।।ऊचुस्तपोनोस्तुवनेर्पयित्वाराज्यंमखांतेत्वयिधर्मलब्धं ।।१५२।।
इतीरितःप्राहसबादरायणोमुनीश्वरैरप्यभियाचितःप्रभुः ।। हिरण्यमेवस्वमिदंमुनीनांमदाज्ञयाभुङ्क्ष्वमशेष
राज्यं ।।१५३।। समर्पितंमेफलवच्चतत्स्यात्पुनर्ग्रहोनैवचदोषकारी।।पितामहोहंभवतांविशेषतोगुरुःपतिश्चैव
ततोमदर्हंथ ।।१५४।। इतीरितास्तेप्रतिपद्यराज्यंददुर्हिरण्यंनिखिलंचतस्मै।। विभज्यविप्रान्सनिजंचभागाम

दात्पृथायैनिखिलंप्रसन्नः ॥१५५॥ सभार्यकाणांवररत्नभूषणान्यशेषतःपुत्रभुवांप्रदाय॥ पृथक्पृथग्योग्यवरां
स्तथैभ्यःप्रादात्प्रभुस्तेमुदिताःप्रणेमुः ॥१५६॥ तद्यज्ञपंचकमजस्त्रिगुणांसएभ्यःसद्दक्षिणांक्रतुपतिर्निखिला
मवाप्य॥चक्रेश्वमेधत्रयमेकमेकंतेषांहरिर्बहुसुवर्णकनामधेयं॥१५७॥सकृष्णेष्वथपार्थेषुसुस्नातावभृथेष्वलं॥
पंचेंद्रवद्विराजत्सुस्तूयमानेष्वपीश्वरैः॥१५८॥स्तूयमानेचतद्यज्ञेक्रोधोनकुलतांगतः ॥ कृत्वोग्रगर्जनंयज्ञंतां
श्चयज्ञकृतोखिलान्॥१५९॥गर्हयन्नूचिवानित्थंभार्यापुत्रस्नुषान्वितः॥सक्तुप्रस्थमदाद्विप्रउंछवृत्तिःसुभक्तितः
॥१६०॥धर्मायातिथयेतस्यकलांनार्हतिषोडशीं॥यज्ञोयमितिहेतुंचविप्रैःपृष्टोभ्यभाषत॥१६१॥ अतिथेस्तस्य
पादोदक्क्लिन्नपार्श्वोहिरण्मयः॥ एकोममाभूदपरःसर्वतीर्थोदकेष्वपि॥१६२॥ मज्जतोऽवभृथेष्वद्धायज्ञानामत्र
चादरात्॥ नाभूदित्यथतत्तत्त्ववेदिभिर्मुनिपुंगवैः ॥ १६३ ॥ कृष्णेनचतमोंधंतंप्रापयद्भिःस्मितेकृते ॥ अद
र्शनंजगामाशुतमःप्रापचकालतः॥१६४॥तदर्थमेवहैरण्यःपार्श्वस्तस्याभवत्पुरा॥कृष्णस्यपांडवानांचमखादे
श्चगुणान्बहून्॥ वदंतोभर्त्सयांचक्रुस्तन्मतज्ञामधुद्विषः॥१६५॥श्राद्धार्थंहिपयःपूर्वंजमदग्नेरदूषयत् ॥१६६॥ ॥११६०॥
नाकुलेनैवरूपेणक्रोधस्तंपितरोशपन्॥भवत्वंनकुलस्तावद्यावद्धर्मादिकान्सुरान्॥१६७॥क्षेप्स्यसीतितमोघो

रंभूयःपापेनयात्वयं॥इत्यभिप्रेत्यतैःशप्तस्तथाकृत्वातमोभ्यगात् ॥१६८॥ यद्यप्यल्पधनत्यक्तंवित्तंबहुफलंभवे
त्॥तथाप्यनंतफलदाःकर्तुरेवमहागुणाः॥१६९॥सतांप्रीतिश्चतत्रापिसद्धरोहरिरेवहि ॥ पार्थेभ्योभ्यधिकःक
र्तासमोवाकोगुणैर्भवत्॥१७०॥सतांचप्रवरोविष्णुःसद्भिर्मुनिवरैर्युतः ॥प्रत्यक्षतःकारयतिपार्थैःप्रियतमैश्चतैः
॥१७१॥यंमखप्रवरंतस्यसमंकिंशुभसाधनं ॥ पठंतिपैंगिनश्चैतान्मंत्रानन्वर्थकानिह॥१७२॥अवैष्णवकृतंक
र्मसर्वमंतवदुच्यते॥अनंतंवैष्णवकृतंतत्रवर्णक्रमात्परं॥१७३॥वैष्णवैरपिमर्त्यैर्यत्कृतंशतगुणंततः ॥ गांधर्वं
कर्मतस्माच्चपितृभिर्मुनिभिस्ततः ॥१७४॥ देवशक्रशिवब्रह्मकृतंतस्मात्क्रमेणच ॥ शतोत्तरमितिज्ञेयंनान्य
द्ब्रह्मकृतोपमं ॥ १७५ ॥ वैष्णवत्वंक्रमाद्वृद्धंब्रह्मांतंजीवराशिषु ॥ फलाधिक्यंकर्मणांहिविष्णोःप्रीत्यैवनान्य
था ॥१७६॥ इतितेननपार्थानांकर्मणान्यत्समंक्वचित् ॥ गुणैर्ज्ञानादिभिःक्वापितस्मात्क्रोधःसतामसः ॥ वि
निंद्यतान्सुसत्वस्थांस्तमोंधमुपजग्मिवान् ॥१७७॥ अथपृष्टोवासुदेवःसुरविप्रादिसंसदि ॥ युधिष्ठिरेणसंहृष्टो
जगादाशेषतःप्रभुः॥१७८॥तेचश्रुत्वाखिलान्धर्मान्भक्त्यापरमयायुताः ॥पूजयंतोजगन्नाथमापुश्चपरमांमु
दं॥१७९॥इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमन्महाभारततात्पर्यनिर्णयेत्रिंशोऽध्यायः ३०॥

ॐयन्नेश्वरेणाभियुतेषुभक्त्यामहींप्रशासत्सुपृथासुतेषु ॥ यियक्षुरागान्निशिविप्रवर्योयुधिष्ठिरंवित्तमभीप्समा
नः ॥ १ ॥ प्रातर्ददानीतिनृपस्यवाक्यंनिशम्यविप्रस्त्वरितोमखार्थे ॥ भीमंययाचेसनृपोक्तमाशुनिशम्य
चादान्निजहस्तभूषणं ॥२॥ अनर्घ्यमग्निप्रतिमंविचित्ररत्नान्वितंविप्रवरस्तदाप्य ॥ ययौकृतार्थोथचनंदि
घोषमकारयद्वायुसूनुस्तदैव ॥ ३ ॥ अकालजंतंतुनिशम्यराजापप्रच्छदूतैस्तमुवाचभीमः ॥ यन्मर्त्यदेहोपि
विनिश्चितायुरभून्नृपस्तेनममासहर्षः ॥ ४ ॥ इतीरितोसौनृपतिस्त्वरेतधर्मार्थमित्यस्यमतंप्रपूजयन् ॥ ज
गादसाध्वित्यथभूयएवधर्मेत्वरावानथसंबभूव ॥५॥ अथांबिकेयंविषयेषुसक्तंदुःसंगदुष्टंकृतभूरिदोषं ॥ स
मस्तराजाप्ययहेतुभूतंविचार्यतंमारुतिरन्वकंपत ॥६॥ अकुर्वतस्तीक्ष्णतपःकुतश्चिन्नैवस्वलोकाप्तिरमुष्यभू
यात् ॥ रागाधिकोयंनतपश्चकुर्यादित्यस्यवैराग्यकराणिचक्रे ॥७॥ आज्ञापरैरस्यनिहंतिसोदरैर्वधूजनैरप्य
भिपूजितेस्मिन् ॥ सनिष्टनत्येवमपीतरैःस्वैःसंपूजितोनासतदाविरागः ॥ ८ ॥ सर्वेपिपार्थास्तमृतेसभार्या
वैचित्रवीर्यंपरमादरेण ॥ पर्यैवचक्रुःसततंसभार्यंकृष्णाचनस्यात्तनयार्तिमानिति ॥ ९ ॥ सप्रीयमाणोनि
तरांचतेषुनैवाधिकंप्रीयतेभीमसेने ॥ स्मरन्सुतांस्तेनहतान्समस्तानपिप्रभावंपरमस्यजानन् ॥१०॥ तस्या

पनेतुंविषयेषुसक्तिंद्वेषंतथैवात्मनिभीमसेनः॥जगादमाद्रीसुतयोःसमक्षमास्फोट्यसंशृण्वतएवतस्य ॥११॥
ताविमौमेभुजौवृत्तौपीनौचंदनरूषितौ ॥ ययोरंतरमासाद्यजरठस्यसुताहताः ॥१२॥ यमौतदन्वमोदेतांत
त्स्नेहाद्गौरवादपि ॥ नैवतत्कृष्णयाज्ञातंपृथयाचसपुत्रया ॥ १३ ॥ तच्छ्रुत्वोत्पन्ननिर्वेदक्षत्ताज्येष्ठस्यवर्धय
न् ॥ उवाचजीविताशातेननुराजन्गरीयसी ॥१४॥ अहोगरीयसीजंतोर्जीविताशाययाभवान् ॥ भीमा
पवर्जितंपिंडमादत्सेगृहपालवत् ॥१५॥नचापराधोभीमस्यब्रुवतस्त्वामिदंवचः॥अग्निर्निसृष्टोदत्तश्चगरोदारा
श्चदूषिताः॥१६॥हृतंक्षेत्रंधनंयस्यकिंभीमेनकृतंत्वयि ॥ अलमासज्जतस्तेद्यनिर्वेदकरमीरितं ॥१७॥ उपका
रायभीमेनतवद्वेषंत्यजात्रयत् ॥ विमुच्यद्वेषकामौत्वंवनेतीर्थनिषेवकः ॥ १८॥ तपसाराधयहरिंततःपूतो
भविष्यसि ॥ इत्युक्तोद्वेषमुत्सृज्यभीमेनिर्वेदमागतः ॥१९॥ अनुज्ञांतपसेप्रातुमुपवासपरोभवत् ॥ अनश्नं
तंचतुर्थेह्निधृतराष्ट्रंयुधिष्ठिरः ॥२०॥ ज्ञात्वासंप्रार्थयामासभोजनार्थंपुनःपुनः ॥ अनुज्ञांवनवासायत्वत्तःप्रा
प्यैवसर्वथा ॥२१॥ भोक्ष्येन्यथानेतिवदन्धृतराष्ट्रःश्रमान्वितः ॥ उपवासकृशोभार्यांशिश्रियेमूर्च्छितःक्षणा
त् ॥ २२ ॥ शंतमेनकरेणाथधर्मजस्तंमृदुस्पृशन् ॥ शनैःसंज्ञामगमयदब्रवीच्चसुदुःखितः ॥ २३ ॥ पुरस्कृत्य

युयुत्सुंत्वंकुरुराज्यमकंटकं॥वयमेवत्वदर्थायकुर्मःसर्वेंतपोवने ॥२४॥ नेत्याहधृतराष्ट्रस्तंकुलधर्मोहिनोवने॥
अंतेदेहपरित्यागस्तन्ममाज्ञातुमर्हसि ॥ २५ ॥ तयोर्विवदतोरेवंकृष्णद्वैपायनःप्रभुः ॥ सर्वज्ञःसर्वकर्तेश
आविर्भूतोब्रवीन्नृपं ॥ २६ ॥ तपसाशेषदोषाणांक्षयकाममिमंनृपं ॥ अनुजानीहिनैवास्यधर्मविघ्नकरोभव
॥२७॥ कालेनिर्वेदमापन्नस्तपसादग्धकिल्बिषः ॥ शुभांगतिमयंयायादन्यथानकथंचन ॥२८॥ इत्युक्तोधर्म
राजस्तमनुजज्ञेसचाशितः ॥ शिक्षयामाससद्धर्मान्नीतिंचविदुषेप्यलं ॥२९॥ केवलस्नेहतोराज्ञेशुश्रावविन
यात्सच ॥ अनुज्ञायगृहंप्राप्तेधर्मज्ञेविदुरंपुनः ॥३०॥ श्राद्धायवित्तमाकांक्षन्प्रेषयामासतद्वचः ॥ श्रुत्वायु
धिष्ठिरोभीममाहदातव्यमद्यनः ॥३१॥ पुत्रपौत्राप्तबंधूनांश्राद्धेच्छोर्वित्तमंजसा॥तमाहभीमःपापानांविमु
खानांमधुद्विषः ॥ पारलौकिकसाहाय्यंनकार्यमितरार्थतः ॥ ३२ ॥ दत्तेनापिहिवित्तेनपुत्रश्राद्धंकरिष्य
ति ॥ तज्ज्ञात्वाददतांदोषोभवेदितिविचिंतयन् ॥ ३३ ॥ कष्टात्कष्टतरंयांतुसर्वेदुर्योधनादयः ॥ भीष्मादी
नांवयंश्राद्धकर्तारस्तेनकिंततः ॥ ३४ ॥ कानीनत्वात्तुकर्णस्यसहास्माभिःपृथैवहि ॥ श्राद्धकर्मण्यधिकृता
किंतस्मैदीयतेधनं ॥३५॥ इत्युक्तवंतंनृपतिरर्जुनश्चोचतुःपुनः ॥ यियासोर्याचमानस्यनिजबाहुबलार्जितं

॥ ३६ ॥ देहिवित्तंपरमतःकिंत्वामेषोभियाचते ॥ इत्युक्तमपिनेत्येवब्रुवाणंशुद्धधार्मिकं ॥३७॥ अप्रीत्या
जोषमास्वेतिप्रोच्योवाचयुधिष्ठिरः ॥ कोशतोयद्बहिर्वित्तंदानभोगादिकारणं ॥ ३८ ॥ ममसंनिहितंसर्वं
तत्पित्रेत्वार्पितंमया ॥ एवमेवार्जुनोप्याहविदुरंपुनरूचतुः ॥ ३९ ॥ मुख्यधर्मरतेभीमेनपिताक्रोद्धुमर्हति
॥४०॥ इत्युक्तोवित्तमादायगत्वाक्षत्ताग्रजेब्रवीत् ॥ युधिष्ठिरार्जुनौभक्तिंनितरांत्वयिचक्रतुः ॥ ४१ ॥ ना
तिहृष्टस्त्वदाज्ञायाभीमस्तन्माकुधोत्रच ॥ शुद्धेक्षत्रियधर्मेहिनिरतोयद्वृकोदरः ॥ ४२ ॥ नृपार्जुनौधर्मरता
वपिलोककृपापरौ ॥ अजातकोपस्तच्छ्रुत्वाधृतराष्ट्रःप्रशांतधीः ॥४३॥ कृत्वाश्राद्धानिसर्वेषांमहादानान्य
नारतं ॥ दशरात्रंददौशुद्धमनसानिर्ऋणत्वधीः ॥ ४४ ॥ सर्वंसमर्प्यगोविंदेपार्थेभ्योन्येभ्यएवच ॥ स्वज
नेभ्यःसमादायसवन्नेत्रेभ्यउच्चधीः ॥ ४५ ॥ अनुज्ञांनिर्गतःप्राहपौरजानपदान्नृपः ॥ धर्मतोरक्षितायूय
मस्मत्पूर्वैर्महात्मभिः ॥४६॥ नचाहंपरमस्नेहाद्युष्माभिःसुकृपालुभिः ॥ अरक्षितेतिकथितःप्रमादादपिस
ज्जनाः ॥ ४७ ॥ इष्टंचयज्ञैःपूर्तैश्चचरितंयुष्मदाश्रयात् ॥ पुत्रस्तुममपापात्मासर्वक्षत्रविनाशकः ॥ ४८ ॥
सर्वातिशंकीमूढश्चवृद्धानांशासनातिगः ॥ सौभ्रात्रंयेनसंत्यज्यपांडवेषुमहात्मसु ॥ कृतंविरूपंसुमहत्कुर्या

द्यन्नापरःक्वचित् ॥ ४९ ॥ अप्रियाणिचकृष्णस्यसुबहून्याचरत्कुधीः ॥ प्रायस्तेनापिमंदेनयुष्मास्वप्यशिवं
कृतं ॥ ५० ॥ भ्रातरोस्यचसर्वेपितच्छीलमनुवर्तिनः ॥ हताश्चस्वेनपापेनससुतामात्यबांधवाः ॥ ५१ ॥
सोहंवयोगतश्चैवपुत्रादिभिरभिष्टुतः ॥ तत्संबंधात्कृतंपापंस्वकृतंचाप्यपेशलं ॥५२॥ पांडवेषुसकृष्णेषुतप
सामार्ष्टुमुद्यतः ॥ तत्रमामनुजानीध्वंकृपयामित्रवत्सलाः ॥ ५३ ॥ मत्प्रियार्थमपिस्नेहःपांडवेषुमहात्मसु ॥
क्रियमाणोपिकर्तव्योभूयएवसदाऽचलः ॥ ५४ ॥ तेहिमेपुत्रकाःसंतइहामुत्रचसौख्यदाः ॥ इत्युक्तेस्वगुणा
नुच्चैःकीर्तयद्भिःसुदुःखितैः ॥ ५५ ॥ पर्यश्रुनयनैःकृच्छ्रात्पौरजानपदैश्चिरात् ॥ अनुज्ञातोययौपार्थैरनुया
तःसुदूरतः ॥ ५६ ॥ संजयोविदुरश्चैनंसभार्यमनुजग्मतुः ॥ अनुवव्राजतंकुंतीवनायकृतनिश्चया ॥५७॥
वार्यमाणापितनयैःसभार्यैर्भृशदुःखितैः ॥ संस्थाप्यतान्सुकृच्छ्रेणययौसान्वेवतंनृपं ॥ ५८ ॥ संदर्शितप
थोराजाकुंतीविदुरसंजयैः ॥ गांधारीसहितःप्रापकुरुक्षेत्रंजगद्गुरोः ॥५९॥ क्रमेणैवाश्रमंव्यासदेवस्यसुर
पूजितं ॥६०॥ त्रिवत्सरेणास्यनिजस्यलोकप्राप्तिंसभार्यस्यजगादतत्र ॥ ब्रह्मांकजस्तेनभृशंप्रतीतोव्यासो
पदिष्टंव्यचरत्तपोग्र्यं ॥ ६१ ॥ सक्षत्तृगांधारिपृथेससंजयेतपोभिराराधयतिप्रभुंहरिं ॥ वैचित्रवीर्येत्रसदार

बंधुभृत्याश्चपार्थाद्दृशयेसमाययुः॥६२॥क्षत्तैकतामत्रयुधिष्ठिरेणप्राप्तोथभार्यासहितंससंजयं ॥ उपास्यमानेषु
विचित्रवीर्यपुत्रंपृथांचैवपृथासुतेषु ॥६३॥ प्रादुर्बभूवामितशक्तितेजोज्ञानाद्भुतैश्वर्यसुखादिरूपः ॥ व्यासो
हरिस्तत्रसमीक्ष्यसर्वैसंपूजयामासुरुदग्रभक्त्या ॥ ६४ ॥ तैःपूजितस्तत्रनिषण्णआहयद्यद्दिष्टंप्रवदंतुतत्त
त् ॥ दास्यामितस्याद्यतदित्यमुष्मिन्भक्त्युच्छ्रयःपांडुसुतैःसदारैः ॥ ६५ ॥ वृतोत्रकुंतीरविसूनुजन्ममृत्यू
त्थदोषापगमंययाचे ॥ ६६ ॥ तेषांप्रदत्तेष्वभिवांछितेषुवैचित्रवीर्यःसहभार्ययैव ॥ संमंत्र्यनिःशेषरणेहता
नांसंदर्शनंप्रार्थितवांस्तमीशं ॥६७॥ ततस्तुतेसत्यवतीसुतस्यसर्वेश्वरस्याज्ञयासर्वएव ॥ समागताःस्वर्गलो
कात्क्षणेनदत्ताचदिव्यादृगमुष्यराज्ञः ॥ ऊषुश्चरात्रिंपरमाज्ञयैवसर्वैस्वभार्यासहितायथापुरा ॥६८॥ तृप्तःस
दारोनृपतिश्चतत्रसर्वैपिदृष्ट्वापरमाद्भुतंतत्॥अथाज्ञयैवास्यपरस्यसर्वाःस्त्रियोनिजेशैःसहिताययुःस्वः॥६९॥
विनोत्तरांतांतुकथांनिशम्यपारीक्षितोयाचततातदृष्टिं ॥ तंचानयामासतदैवकृष्णोह्यचिंत्यशक्तिःसविकुंठ
लोकात्॥७०॥दृष्ट्वासपारीक्षितआपतुष्टिंस्वतातमीशेनसमाहृतंपुनः ॥ संपूज्यतंकृष्णमपीशवंद्यंक्षमापया
मासपरीक्षितात्मजः ॥ चक्रेचविस्रंभमतीवभारतेपुनश्चतत्रस्वजनैःसमेतः ॥ ७१ ॥ पार्थाःपुनःप्राप्यपुरंस्व

कीर्यंधर्मेणपृथ्वींपरिपालयंतः ॥ भोगानरागाअजुषंतयोग्यान्युक्ताजगद्धातरिवासुदेवे ॥७२॥ वर्षत्रयांते
त्समाहिताग्नित्यक्ताग्निभिस्तैर्वनमालिहद्भिः ॥ तेशुश्रुवुर्धृतराष्ट्रंसभार्यंसहैवकुंत्यापरिदग्धदेहं ॥ ७३ ॥
वीटासुखंध्यानपरंनिशम्यस्वर्यांतमात्मीयपितृव्यमाशु ॥ समेत्यभर्त्राप्रतिपूज्यमानांकुंतींचतस्माविदधुःक्रि
याश्च ॥७४॥ तेविष्णुभक्त्यापरिपूतकर्मभिर्ज्ञानेनचांतेतमनुस्मरंतः ॥ पार्थैःसुपुत्रैःसुकृतोर्ध्वकर्मभिर्वृद्धिंशु
भस्यापुनरप्ययांशुभाः ॥७५॥ गावद्गणिर्व्याससकाशमेत्यशुश्रूषयातस्यपुनर्निजांगतिं ॥ प्रपेदिवान्पांडुसु
ताश्चकृष्णंप्रतीक्षमाणाःपृथिवीमशासन् ॥७६॥ अष्टादशाब्दाःपृथिवींसमस्तांप्रशासतामेवमगुर्महात्मनां ॥
अरिक्तधर्मार्थसुखोत्तमानामनुज्झितानंतपदस्मृतीनां ॥७७॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविर
चितेश्रीमन्महाभारततात्पर्यनिर्णयेएकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ ॥
ॐततःकुरुक्षेत्रमवाप्यकृष्णोदीक्षांप्रपेदेद्विषडब्दसत्रे ॥ सएवचव्यासभृगूद्वहात्माचक्रेत्रसादस्यमजोप्रमेयः
॥१॥ तत्रर्त्विजोदक्षभृगुप्रधानाःपार्थायदूनांप्रवरैःसमेताः ॥ ब्रह्मेशशक्रप्रमुखाःसुराश्चचक्रुःसुसाचिव्यमनं ॥११६४॥
तदासाः ॥२॥ सर्वेचजीवावसुधातलस्थायेन्येंतरिक्षद्युमुखोत्तरेषु ॥ वसंतिनारायणपादसंश्रयास्तेचात्रसर्वे

सुमुदुःसनागाः ॥ ३ ॥ सुनिर्णयस्तत्त्वविनिर्णयार्थिनांतत्त्वस्यचाभूदिहवादशीलिनां ॥ मिथोविवादात्सु
रभूसुराणांवाक्याद्धरेर्व्यासभृगूद्रहात्मनः॥४॥धर्मार्थकामानखिलानवापुस्तदर्थिनोमुक्तिमपीहकृष्णात् ॥
यथेष्टपानाशनवाससोजनाविचेरुरत्रामरमानवादयः ॥ ५ ॥ क्षेत्रंतदासीद्धरिलोकसंमितंयदीयुरत्राखिल
सज्जनायुतिं ॥ नानाप्तकामाश्रयतोबभूवुर्निर्यन्तदृश्यश्रयतोत्रकेशवः ॥६॥ द्वादशाब्दंमहासत्रमेवमेताह
शंहरिः ॥ समाप्यावभृथस्नातःपूजयित्वाखिलाञ्जनान् ॥ ७ ॥ अनुजज्ञेक्रमेणैववत्सरेणसमागतान् ॥ स्व
कुलंसंजिहीर्षुःसविप्रशापमजीजनत् ॥८॥ उपदिश्यपरंज्ञानमुद्धवायामुनाऽऽश्रमं ॥ बदर्याख्यंप्रापयित्वा
सप्तमाब्दंशतोत्तरं ॥९॥ प्रतीक्षन्पालयामासपार्थैःसहभुवंप्रभुः ॥ समारब्धंकलियुगंयदादुर्योधनोपितत् ॥
षट्त्रिंशाब्दंपुनःकृष्णःकृतमेवान्ववर्तयत् ॥१०॥ कृतादपिविशेषोयंयत्पुण्यस्याधिकंफलं ॥ अल्पमेवचपा
पस्यकालात्कृष्णाज्ञयातथा ॥११॥ एवंसुधार्मिकेलोकेहरिभक्तिपरायणे ॥ नष्टेषुकलिलिंगेषुयुगवृत्तिमभी
प्सवः ॥१२॥ ब्रह्मरुद्रादयोदेवाःस्तुत्वाकेशवमव्ययं ॥ व्यज्ञापयन्स्वलोकाप्तिमोमित्याहसचाच्युतः ॥ १३ ॥
प्राचुर्येसज्जनस्यस्यान्नकलेर्वृद्धिरंजसा ॥ इतिस्वकुलसंहृत्यैप्रभासमनयत्प्रभुः ॥ १४ ॥ पुण्यक्षेत्रेपिनस्मृतिः

स्वगृहेप्यतिधर्मदा ॥ गत्वैवाल्पमपिक्षेत्रंस्यान्महत्फलमित्यजः ॥ १५ ॥ प्रकाशयितुमेवैतान्प्रभासायकुश
स्थलात् ॥ नीत्वादानानिसद्धर्मांस्तैरकारयदच्युतः ॥१६॥ तेततःशापदोषेणकृष्णेनैवविमोहिताः ॥ मैरे
यमत्ताअन्योन्यंनिपात्यस्वांतनुंगताः ॥१७॥ तद्दृष्ट्वाबलदेवोपियोगेनस्वांतनुंजहौ ॥ १८ ॥ ततःपरेशोग
णितानुभावःस्वसारथिंपांडवानांसकाशं॥स्वलोकयानप्रतिबोधनायस्वस्यानुचैषांत्वरयाभ्यपातयत्॥१९॥
अथासतःपिप्पलमूलईशितुरूरुस्थितंपादतलंसुताम्रं ॥ दृष्ट्वाजरानामससर्जशल्यंभक्तोप्यलंरोहितशंकमा
नः ॥२०॥ अच्छेद्याभेद्यदेहस्यशल्येपादमुपस्थिते ॥ समीपमागतोव्याधोदृष्ट्वाभीतोपतद्भुवि ॥ २१ ॥ वि
प्रवाक्यंमानयानःकारयित्वामुनाहरिः ॥ पापंमांजहिदेवेतियाचंतमनयद्दिवं ॥ २२ ॥ पादप्रहारदोषेणतं
भृगुंव्याधतांगतं ॥ पश्चात्तापेनभक्त्याचसुप्रीतस्तच्छरीरिणं ॥ स्वाज्ञाप्राप्तविमानेनदिवंनिन्येजनार्दनः
॥ २३ ॥ नीचायोनिर्नीचनीचकर्मास्यंनीचकर्मतः ॥ अदुष्टत्वात्तुमनसोभक्तिलोपोनचाप्यभूत् ॥ २४ ॥
भृगोरत्राबुद्धिपूर्वंनातिदोषकृदप्यभूत् ॥२५॥ ततोविरिंचेशपुरंदराद्याःपुरःस्तुवंतोभिययुःप्रणम्य ॥ कृष्णं
सचाश्वेवययौस्वलोकंस्वतेजसासर्वमिदंप्रकाशयन् ॥ २६ ॥ गोपालमंत्रंभजतांफलप्रदस्त्वेकेनरूपेणसभु

व्यदृश्यः ॥ तस्यौद्वितीयेनचसूर्यमंडलेतृतीयमासीच्छिवपूजितंवपुः ॥ २७ ॥ संपूजितंब्रह्मलोकेचतुर्थकं
जोद्भवेनाथपरंस्वधाम ॥ समाप्नुवानंवपुरस्यपंचमंभक्त्यान्वयुर्देववराःस्वशक्त्या ॥ २८ ॥ तत्तेजसातेप्रवि
मुष्टदृष्टयःपुरुष्टुताद्याअमितोरुदीधितेः॥ यावत्स्वगम्यंत्वनुगम्यतस्थुर्निमीलिताक्षाविहतोर्ध्वचाराः ॥२९॥
वींद्रेशशेषानुगतःस्वयंभूर्धामप्रविष्टंतमजंप्रणम्य ॥ वींद्रादिकैरप्ययुतःस्वपित्राश्लिष्टोरहश्चाकथयत्तथास्तौत्
॥३०॥ सपूर्वरूपेणसमाप्यचैक्यंविभज्यचेच्छानुसृतोथरेमे ॥ हरिःश्रियाब्रह्ममुखैश्चमुक्तैःसंपूज्यमानोमि
तसद्गुणात्मा ॥ ३१ ॥ ब्रह्मापिशर्वादियुतःस्वलोकंप्राप्तःपुनस्तत्रगतंचकृष्णं ॥ रेमेभिपश्यन्प्रतिपूजयंस्तंसु
राश्चसर्वेरविबिंबसंस्थं ॥३२॥ यतोनदर्शिताभ्रांतिःप्रादुर्भावेष्वपिकचित् ॥ देहत्यागानुसारेणहरिणातदिहा
च्युतः ॥३३॥ मोहयित्वाऽसुरानंधंतमःप्रापयितुंप्रभुः ॥ चिदानंदैकदेहोपित्यक्तंदेहमिवापरं ॥ सृष्ट्वास्वदे
होपमितंशयानंभुव्यगाद्दिवं ॥ ३४ ॥ दारुकोत्त्यासमायातःपार्थस्तमदहत्तदा ॥ ३५ ॥ रौहिणेयादिका
नांचशरीराणिप्रधानतः ॥ दारुकोविष्णुलोकंतुपुनरापयथागतं ॥३६॥ तथैवजनमोहायप्रापवह्नावदृश्य
तां ॥ रुक्मिण्यगाद्धरेःपार्श्वंसत्याकृत्वातपस्तथा ॥३७॥ चिदानंदैकदेहेपिद्विरूपेइवतेयतः ॥ एकैवातः

कृष्णवत्तेदुष्टान्मोहयतस्तथा ॥३८॥ अन्यामहामहिष्यस्तुत्यक्त्वादेहंहुताशने ॥ काश्चित्काश्चिच्चतपसात्य
क्तदेहाहरिंययुः ॥३९॥ रौहिणेयादिकानांचभार्यावह्निमुखेतनुं ॥ त्यक्त्वास्वभर्तृनेवापुःसर्वाएवपतिव्रताः
॥४०॥ वसुदेवःपार्थमुखाच्छ्रुत्वैतद्योगमास्थितः ॥ त्यक्त्वादेहंकश्यपत्वंप्रापकृष्णानुरागतः ॥४१॥ तस्यार्जु
नोश्वमेधाग्नावंत्यकर्माकरोत्तदा ॥ त्यक्तदेहास्तस्यभार्यावह्नौप्रापुस्तमेवच ॥ ४२ ॥ स्त्रियोबालांस्तथादाय
धनंचैवधनंजयः ॥ विनिर्ययौद्वारवत्यास्तांचजग्रासससागरः ॥ ४३ ॥ स्त्रीबालसहितेपार्थएकस्मिन्पथिग
च्छति ॥ शापात्सुपापाआभीराःस्त्रीजनाञ्जहुरुद्धताः ॥ ४४ ॥ यास्ताःषोडशसाहस्रवनिताःशतसंयु
ताः ॥ कृष्णशापान्म्लेछवशंययुर्दर्पनिमित्ततः ॥ ४५ ॥ ह्रियमाणेधनेचैववनितासुचवासविः ॥ युयुत्सु
र्गांडिवंसज्जंकृच्छ्रेणैवचकारह ॥४६॥ क्षीणास्तस्यशरादैवान्नास्त्राणिस्मृतिमाययुः ॥ सतद्दैवकृतंज्ञात्वासं
स्मरन्पुरुषोत्तमं ॥ निघ्नन्शत्रून्गांडिवेनशेषंरक्षन्कुरूनगात् ॥ ४७ ॥ तदाकुरुक्षेत्रगतंजह्रुरुंसुपूर्णविज्ञा
नबलाब्धिसत्सुखं ॥ तमेववासिष्ठकुलोद्भवंहरिंनिरीक्ष्यदुःखेनपपातपादयोः ॥ ४८ ॥ सतेनपुंसांप्रवरे
णहेतुभिःसंबोधितोऽज्ञानतमोंशुमालिना ॥ संस्थाप्यचेतःपुनरेवतस्मिञ्जहौशुचःप्रायशएवधैर्यात् ॥ ४९ ॥

स्त्रियोम्लेछहृताःकृष्णप्रेषितादाल्भ्यतःपुनः ॥ गोविंदैकादशींश्रुत्वाकृत्वासारस्वतेजले ॥ ५० ॥ निमज्ज्यवा
योर्वचनात्त्यक्तदेहादिवंययुः ॥ अर्जुनस्तुकुरुक्षेत्रेहार्दिक्ययुयुधानयोः ॥ सुतौसारस्वतेचैवदेशेराज्येभ्यषेच
यत् ॥ ५१ ॥ अनिरुद्धसुतंवज्रंप्रियंकृष्णस्यसद्गुणं ॥ सशूरसेनेंद्रप्रस्थराजानमकरोद्वशी ॥ ५२ ॥ स्त्रीबा
लांश्चधनंचैवतस्मिन्संस्थाप्यफल्गुनः ॥ ययौभ्रातृनशेषंचवृत्तंतेषामवर्णयत् ॥ ५३ ॥ तेचैवियोगसमयंस्मरं
तोमुरवैरिणः॥अभ्यषिंचन्भागवतंमहाराज्येपरीक्षितं॥५४॥स्त्री हारिणांचम्लेछानांवधायैनमयोजयन् ॥ कृ
तंचतेनतत्कर्मवोढ्रापैतामहींधुरं ॥ ५५ ॥ समयंपरिरक्षद्भिर्नपार्थैरेवतत्कृतं ॥५६॥ वासुदेवपदास्पृष्टभूकंटक
समुद्धृतिः ॥ समयःपांडवानांहितस्यैवानुगतिःपरं ॥ ५७ ॥ अनुव्रजद्भिर्विश्वेशंनास्माभिर्भूस्तदुज्झिता ॥
भोक्ष्यारक्ष्यापिवातेषामित्येवसमयःपुरा ॥५८॥ तत्रकालीभीमभार्यावैष्णवंयोगमास्थिता ॥ कृष्णयैकत्व
मापन्नात्यक्त्वादेहंतुमानुषं ॥५९॥ सुभद्राद्यास्तुयाभार्याःपार्थानांतुतदाज्ञया ॥ युयुत्सुश्चात्रशिक्षार्थंपौत्रस्यै
वावसन्पुरे ॥ ६० ॥ संत्यज्यराजचिह्नानिवैष्णवंयोगमास्थिताः ॥ वीराध्वानंययुःसर्वेकृष्णयासहपांडवाः
॥६१॥ प्रागुदीचींदिशंपूर्वंययुस्तत्रार्जुनोधनुः॥ नात्यजल्लोभतस्तत्तुसमुद्रमुपपावकः ॥ दृष्ट्वाययाचेराजानंत

दुक्तःप्रास्यदंबुधौ ॥ ६२ ॥ प्रातिभाव्यंतुवरुणेनिस्तीर्याग्निरदृश्यतां ॥ ययौतेपियुःक्षिप्रंप्लवंतःसप्तवारिधीन्
॥ ६३ ॥ अहोभिःसप्तभिर्योगंसमारूढाःप्रदक्षिणं ॥ कृत्वाक्वचिदसज्जंतआसेदुर्गंधमादनं ॥ ६४ ॥ तत्रना
रायणक्षेत्रेतेषांतन्वोपतन्क्रमात् ॥ द्रौपदीसहदेवादिपंचानांतत्रमारुतिः ॥ ६५ ॥ सदेहनाकानिच्छत्वाद्दे
हप्रपतनंहितत् ॥ ६६ ॥ तेषामिहेतियाथार्थ्यंजानन्पप्रच्छधर्मजं ॥ केनकेनापतद्देहोदोषेणनइतिक्रमात्
॥ ६७ ॥ मृतिकालेहियोयस्यदोषंवक्त्यृणमोचनं ॥ तस्मात्स्यादुक्तदोषस्येत्याहतच्छ्रुतिरेवतत् ॥ ६८ ॥ ऋ
णमोक्षणायसर्वेषांभीमोदोषानवादयत् ॥ ६९ ॥ सोपीच्छापतितान्देहानजानञ्शुद्धकर्मणां ॥ अपश्यन्का
रणंप्राहदोषात्स्यादेवमित्यपि ॥ राजासंभावनामात्रान्नहिकार्यमकारणं ॥ ७० ॥ स्वच्छंदमृत्यवोयोगाद्देहा
नुत्सृज्यपांडवाः ॥ कृष्णाचापुःपरंस्थानंयन्नायांत्यपिदेवताः ॥ ७१ ॥ इतिश्रुतेर्नतेपापाद्देहांस्तत्यजुरूर्जि
ताः ॥ ७२ ॥ ऋणान्युन्मुच्यदोषोक्त्यास्वानांभीमःस्वकांतनुं ॥ तत्याजपरमंध्यायन्नापचस्थानमुत्तमं ॥
इतिस्कंदपुराणोक्तंव्यासवाक्यमृषीन्प्रति ॥ ७३ ॥ भीमादृतेहिचतृषुपक्षपातस्तुवासवौ ॥ योग्यएवेतिकृ
ष्णायानदोषःस्यात्कथंचन ॥ ७४ ॥ नीतिरूपेवीर्यबलेमहांत्येषांयतःक्रमात् ॥ प्राणत्वाद्भोगशक्तिश्चनहिदो

षायमारुते ॥७५॥ यथास्वरूपविज्ञानमात्मन्यपिनदोषकृत् ॥ इतिव्याससमृतेरेषामुक्तदोषोद्भवः कथं ॥७६॥
कदाचिदतिमानोपित्रयाणामेषुजायते ॥ तथापितत्फलंनैततत्तारतम्यंहिमुक्तिगं ॥ ७७ ॥ गुणदोषाधिका
ल्पत्वादत्रस्थमपिहिश्रुतं ॥ प्रारब्धकर्मनाशेहिपतेद्देहोप्यपापिनः ॥ ७८ ॥ युधिष्ठिरोपिहिस्वर्गंबुभुजेनैव
तत्तनुः ॥ अतिमानादयोदोषाःकुतएवहिमारुतेः ॥ ७९ ॥ अनादिकालतःसर्वदोषहीनागुणाधिकाः ॥ स
र्वजीवगणेभ्योयेतेहिवायुत्वमाप्नुयुः ॥ ऋजवोनामयेदेवादेवानामपिदेवताः ॥ ८० ॥ अभावंह्यतिमानादेर्भी
मस्याहचकेशवः ॥ ८१ ॥ यत्किंचात्मनिकल्याणंसंभावयसिपांडव ॥ सहस्रगुणमप्येतत्त्वयिसंभावयाम्यहं
॥ ८२ ॥ इतितस्माद्यथायुद्धेधर्महानिममन्यत ॥ एवमत्राप्यधर्मेणदेहपातंनृपोब्रवीत् ॥ ८३ ॥ पूज्येभ्यः
पूर्वमेवैषांदेहपातमभीप्सतां ॥ तत्कामाद्देहपातोभून्नपापान्मुच्यतांयथा ॥ ८४ ॥ नहिपापफलंमुक्तौदेहपा
तःकथंचन ॥ किंतुकर्मक्षयादेवतथासर्वत्रनिश्चितः ॥ ८५ ॥ तेषुस्वलोकान्प्राप्तेषुधर्मजःस्वात्मनासह ॥ य
यौपुरोदेवरथस्तदास्यावततारह ॥८६॥ रथमारुहेतिकथितोरथिनापुरतःशुनः ॥ आरोहमब्रवीन्नैतद्युक्तमि
त्याहसोपितं ॥ ८७ ॥ नारुहेयंविनाश्वानमितितेनस्थिरोदिते ॥ स्वरूपंदर्शयामासधर्मोह्याप्तःस्वरूपतां

॥ ८८ ॥ आनृशंस्यपरत्वेनकीर्तिमेवात्मनोवृषः ॥ ख्यापयामासकौंतेयरूपिणोधर्मसूक्तिभिः ॥ ८९ ॥
ततःसरथमारुह्यलोकानामुत्तरोत्तरं ॥ अतिक्रम्याखिलान्राज्ञोजगामश्रीपतिप्रियः ॥ ९० ॥ सर्वेषामुत्तरं
लोकमैंद्रंप्राप्येदमेवते ॥ स्थानमित्युदितोदेवैर्दुर्योधनमवैक्षत ॥ ९१ ॥ सभ्रातृकंज्वलंतंचसर्वेषामुपरिस्थि
तं ॥ तंदृष्ट्वापरमक्रुद्धोनिमील्यनयनेशुभे ॥ ९२ ॥ भ्रातरोमेक्वकृष्णाचकर्णाद्याःक्वचबांधवाः ॥ धृष्टद्युम्ना
दयःपुत्राहैडिंबाद्याश्चसर्वशः ॥ ९३ ॥ यादवाश्चेतिपप्रच्छदेवास्तेचतमब्रुवन् ॥ किंतेतैःस्वकृतंकर्मभुज्यतेत्र
नचापरैः ॥९४॥ इत्युक्तआहपापोयंपृथिवीक्षयकारकः ॥ सर्वातिशंकीमित्रध्रुङ्नारायणपराङ्मुखः॥९५॥
नास्तिकोतिशठःक्रूरोद्वेष्टाविष्णोश्चतद्भुवां ॥ कथंदुर्योधनःस्थानंसर्वोत्तममवाप्तवान् ॥९६॥ कथंचसर्वधर्म
ज्ञानारायणपरायणाः ॥ संस्थिताःपरमेधर्मेदृश्यंतेत्रनमत्प्रियाः ॥ ९७ ॥ यत्रसंतस्तुतेसंतितत्रस्थातव्यमेव
मे ॥ निरयेपिनचात्रापिह्यनेनसहपापिना ॥ ९८ ॥ अस्यवीरतमस्येदंधार्तराष्ट्रस्ययुज्यते ॥ इत्युक्त्वादेव
तादूतंस्वानांसंदर्शनार्थिनः ॥ ९९ ॥ राज्ञःसंप्रेषयामासुस्तत्संदर्शितवर्त्मना ॥ दुर्गंधेनसुकृच्छ्रेणतमसाप्रावृते
नच॥ १०० ॥ गत्वैवकियतींभूमिंतद्दुर्गंधासहोनृपः ॥ इच्छन्निवर्तनंतत्रस्वानांवाचइवाशृणोत् ॥ १०१ ॥

क्षणंतिष्ठमहाराजसन्निधानबलात्तव ॥ वेदनानोनमहतीत्येतच्छ्रुत्वायुधिष्ठिरः ॥ १०२ ॥ केयूयमितिपप्र
च्छदीनध्वनिविशंकितः ॥ भीमोहमर्जुनःकर्णइत्याद्युक्तमिवाश्टणोत् ॥ १०३ ॥ श्रुत्वातत्कृपयाविष्टःशो
कामर्षसमन्वितः ॥ आहदूतंयथेष्टंत्वंगच्छनाहमितोव्रजे ॥१०४॥ नचस्वर्गेणमेकार्यंत्यक्त्वास्वजनमीदृशं ॥
इत्युक्तःप्रययौदूतस्तस्थावत्रयुधिष्ठिरः ॥ १०५॥ ततोत्रदेवाःपुरुहूतपूर्वकाःसमाययुःस्नेहवशाद्युधिष्ठिरे ॥ते
ष्वागतेष्वेवनतत्रवाचोदीनानदुर्गंधतमोप्यपश्यत् ॥ १०६ ॥ स्वर्गोत्तमंदेशमपश्यदेतदभ्रांतचेताःसयुधिष्ठि
रस्तदा ॥ आहात्रधर्मःपुनरात्मसद्यशःप्रकाशयन्पांडुसुताभिधंस्वं ॥ १०७ ॥ धर्माद्विशिष्टाहिसदानृशंस
तादृष्टाचसात्वय्यधिकात्रिशोमया ॥ शक्रोप्युवाचैनमिदंमृषातेप्रदर्शितंद्रोणकृतेमृषागिरः ॥ १०८ ॥ कृ
च्छ्रादिदंतेकथितंनचातिविस्रंभआसीत्तवकृष्णवाक्ये ॥ नह्याज्ञयावासुदेवस्यकिंचित्पापंभवेत्सर्वविधर्मिणो
पि ॥ १०९ ॥ ब्रह्मापरोक्षेपिविकर्मसूचकंप्रारब्धपापस्यविषाशनंयथा ॥ पश्यात्रभीमप्रमुखान्मुखस्थान्संपू
ज्यमानांस्त्रिदशैःसुरूपान् ॥ ११० ॥ कुतःपरब्रह्मदृशांसुशुद्धसत्कर्मणांविष्णुपरायणानां ॥ परेणयोगेनवि
सृष्टतन्वांदुःखंभवेद्देववराधिपानां ॥ १११ ॥ एतेहिदेवप्रवराःपृथिव्यांजाताभुवोभारजिहीर्षुमीशं ॥ प्रतोष्य

तद्भावितबुद्धिकर्मभिः पुनश्चतेनैवसहापिरेदिवं ॥ ११२ ॥ नतेनृपाद्यापिहिमानुषोगतोभावस्ततोद्वेष्टिसु
योधनादीन् ॥ निमज्ज्यतद्विष्णुपदोदकेत्रविसृज्यदेहंभजदेवभावं ॥ ११३ ॥ सुयोधनाद्यायदिमेसुपापाआ
रब्धपुण्यक्षयमाप्यनित्ये ॥ निःशेषसौख्योज्झितनित्यदुःखेऽवशाःपतिष्यंत्यपुनर्निवृत्ताः ॥ ११४ ॥ देवांश
जायेतुसमस्तशस्तेस्वमूलरूपंसमवाप्यकाले ॥ स्वतारतम्यानुसृतांविमुक्तिंप्राप्स्यंतिनात्रापिविचार्यमस्ति
॥ ११५ ॥ इत्युक्तआश्वेवनिमज्ज्यगंगांधर्मात्मजस्तत्रविसृज्यदेहं ॥ सद्योबभौदैवतमाप्यकायंविसृष्टरोषादि
समस्तदोषः ॥ ११६ ॥ सतुप्रपश्यन्स्वजनंसमस्तंस्वमूलरूपातिसमीपसंस्थं ॥ ददर्शभीमंचमरुत्समीपेमध्ये
ज्वलंतंमरुतांगणस्य ॥ ११७ ॥ ददर्शकृष्णामपितत्समीपेश्रियाज्वलंतींसमतीत्यचान्याः ॥ स्प्रष्टुंचसंस्कार
वशादियेषनिषिध्यतंप्राहसुराधिराजः ॥ ११८ ॥ एषाहिसाक्षाज्जगतांप्रियस्यप्राणात्मनोजीववरेश्वरस्य ॥
प्राणप्रियाश्रीरितिनामयस्याःशमात्मकेस्मिन्नमतेसदैका ॥ ११९ ॥ युष्मच्चतुर्देहगतस्यवायोर्वायुप्रियाभी
मतनोस्तथैव ॥ भोगायसृष्टापुरुषोत्तमेनयुष्मत्प्रियार्थंभवतांचदारैः ॥ १२० ॥ प्रीतिस्ततोह्यभ्यधिकाबभू ॥११६९॥
वभीमस्यचास्यास्तदनुस्मपार्थे ॥ ततोभवत्स्वेवयथाक्रमेणगुणानुसारेणसमीरणस्य ॥ १२१ ॥ इयंहिसाशु

द्धतनुःप्रजाताशच्यादियोगापगताम्यदेहा ॥ यूयंचसर्वेमरुतोविशेषसंयोगहीनाःस्वशरीरसंस्थाः ॥१२२॥ स्पर्शेपिनास्याःपवमानपत्न्याःसुपूततालंभवतामिदानीं॥ नचोत्तरत्रापिभवेत्कथंचिद्दिवौकसांमानुषदेहिनो यथा ॥ १२३ ॥ इतीरितंतंप्रतिसन्निवृत्तंविनाशयन्मानुषवासनांस्वयं ॥ समाश्लिषच्छुद्धतनुःस्तनोत्थोध र्मोहरेःसोभवदाशुतत्समः ॥ १२४ ॥ ततस्तुपार्थाअखिलाःस्वमूलरूपैःसहैवाविविशुर्मुदान्विताः ॥ स्वी यानिसद्मानिततोप्यनूनभोगाःसदारान्यवसंश्चतत्र ॥ १२५ ॥ तत्रापिकृष्णेनसमागमोभूत्पुरेवतेषामपित त्पराणां ॥ चिक्रीडएभिःसहितस्तथैवकृष्णोपितद्वत्सरथोर्जुनेन ॥ १२६ ॥ अन्येतुदेवांशभवाःसमस्ताःस्वमू लरूपैक्यमवापुराशु ॥ कर्मक्षयादेवसुरेतरास्तुपुण्यक्षयंप्राप्यभुविप्रजाताः ॥ १२७ ॥ चतुःसहस्रंत्रिशतोत्त रंतेसंवत्सराणामनुभूयदिव्यान् ॥ भोगान्नरत्वेपिसदेश्वरोहमसज्जगच्चेतिधियाप्नुवंस्तमः ॥ १२८ ॥ दुःखेपिते षामिहतारतम्यंकलेःपरंदुःखमिहाखिलाच्च॥यथाविरिंचस्यवरंसुखंस्यान्मुक्तौहरिद्वेषकृतोविशेषः॥१२९॥के चित्पिशाचासुरराक्षसत्वमवाप्यविष्णोरपितत्पराणां॥ द्वेषात्तमोंधंत्वरयासमाप्नुयुर्देवाःस्वकालेनिजयोग्यमु क्तिं ॥ १३० ॥ चतुःसहस्रेत्रिशतोत्तरेगतेसंवत्सराणांतुकलौपृथिव्यां ॥ जातःपुनर्विप्रतनुःसभीमोदैत्यैर्निगूढं

हरितत्त्वमाह ॥ १३१ ॥ तदैवकृष्णापिभुविप्रजाताप्रीत्यैहरेरंधतमस्यपातयत् ॥ महासुरान्विष्णुपरार्जुना
द्याःकृतेप्रजाताहरितोषणाय ॥ पुनश्चतेस्थानमवाप्यसर्वेस्वीयापरांतेतुविमुक्तिमाप्नुयुः ॥ १३२ ॥ वायुत्व
माप्तःसहनूमदंशोब्राह्मंपदंप्राप्यवृकोदरश्च ॥ वागीश्वरत्वंगतयैवकृष्णयासहैवमुक्तिंगमिताखिलोत्तमां
॥१३३॥ भुविद्युलोकेचविरिंचतायांमुक्तौचताभ्यामधिकंसमस्तात् ॥ संतोष्यतेपूर्णगुणोरमेशःसदैवनित्यो
जिततद्रतिभ्यां ॥ १३४ ॥ भूषन्नयोधिवभ्रूषुनम्रतेबळित्थातद्वपुषेधायिदर्शतं ॥ तांसुतेकीर्तिंमघवन्महित्वे
त्यादिसूक्तानिचतत्प्रमाणं ॥ १३५ ॥ अन्यानिवाक्यानिचवैदिकानिसपंचरात्रोक्तिपुराणकानि ॥ पृष्टश्चभी
ष्मोत्रयुधिष्ठिरेणतन्मोक्षधर्मेष्वपिकिंचिदाह ॥ १३६ ॥ एवंप्रयातेषुसकेशवेषु स्वानेवलोकान्यदुपांडवेषु ॥
परीक्षिताद्यास्तुतदन्वयोत्थाव्यासानुशिष्टाःपृथिवीमरक्षन् ॥ १३७ ॥ तैःक्षेमकांतैरिह भारतादिशास्त्राणिशृ
ण्वद्भिरशेषविद्भिः ॥ व्यासप्रसादाच्चकलौचधर्मोज्ञानंचसुत्रातमगान्ननाशं ॥ १३८ ॥ संवत्सराणांचसहस्रके
गतेप्राप्तेषुविद्यामखिलेषुसत्सु ॥ दग्धाःपुरायेत्रिपुरघ्नतैवरुद्रेणजाताःपृथिवीतलेते ॥ १३९ ॥ अदर्शनंसर्व ॥११७०॥
मुनींद्रबृंदैःसहैवसज्ज्ञानमहानिधाने ॥ व्यासेप्रयातेपिसुतत्त्वविद्यातत्संप्रदायादपितैरवाप्ता ॥ १४० ॥

उत्सादितत्वात्तुदुरागमानांतत्संप्रदायस्यचनाशितत्वात्॥प्रसारितत्वाच्चसदागमानांपापाअपिज्ञानमवापुरे
तत् ॥ १४१ ॥ शुनापुरोडाशमिवावलीढंवेदश्रुतिंचांत्यजनैरवाप्तां ॥ अनंतदुःखाप्तिसुयोग्यदैत्यैर्विद्या
मवाप्तांतुनसेहिरेसुराः ॥ १४२ ॥ नावाग्गतिःक्वापिसुवेदिनांभवेत्प्राप्यंसुखंनित्यमवश्यमेभिः ॥ प्राप्यंतमो
धंत्वसुरैर्नमुक्तिःकदाचिदप्येतदचिंतयन्सुराः ॥ १४३ ॥ ज्ञानप्रदानायसतांतदन्यज्ञानप्रणाशायचविष्णुनै
ते ॥ क्लृप्तास्ततस्तेसविरिंचशर्वाविज्ञापयामासुरुपेत्यविष्णुं ॥ १४४ ॥ क्षीरोदधेरुत्तरतीरनिष्ठितैरभिष्टुतः
सुष्टुतिभिःपुरुष्टुतः ॥ प्रदायतेषामभयंरमापतिःक्षणादभूच्चारुतमाकृतिःशिशुः ॥ १४५ ॥ यस्त्रैपुराणांप्रथ
मोत्रजातःशुद्धोदनेत्येवजिनेतिचोक्तः ॥ क्षेत्रेगयाख्येस्यशिशुंप्रजातंसंप्रास्यदूरेत्रबभूवविष्णुः ॥ १४६ ॥
अजानमानाःस्वशिशुंगतंतंशिशुंहरिंवीक्ष्यनिजंस्ममेनिरे॥तेषांतदावैदिककर्मवीक्ष्यसंप्राहसत्तद्वपुषैवकेश
वः ॥ १४७ ॥ तंजातमात्रंप्रहसंतमीक्ष्यसुविस्मितैःपृष्टउवाचविष्णुः ॥ बुद्धोहमित्येवसुनित्यबोधाज्जगाद
चैषामथबुद्धदर्शनं ॥ १४८ ॥ तथाप्यविश्वासमवेक्ष्यतेषांसस्मारदेवानखिलाञ्जनार्दनः ॥ विज्ञायतेतस्य
मनोगतंनिजान्प्रचिक्षिपुर्हेतिगणानमुष्मिन् ॥ १४९ ॥ सजातमात्रःशिवपूर्वकाणांशूलादिहेतीरखिला

निगीर्य ॥ दैत्यातिमोहायनिजंचचक्रंस्वमुक्तमाश्वेववशीसमग्रहीत् ॥ १५० ॥ तदासनत्वेनविधायत
स्मिन्समास्थितंदेवगणाःप्रणम्य ॥ जग्मुःस्वधामानिवचांसिचास्यस्वीचक्रुराश्वेवजिनादिदैत्याः ॥ १५१ ॥
तेज्ञानधर्मावपहायपापाविमोहितादेववरेणसर्वे॥जग्मुस्तमोंधंक्षणिकंसमस्तंज्ञानंनसचेतिदृढंस्मरंतः॥१५२॥
नारायणःप्राप्यसुरेंद्रबृंदंवृत्तंचतेषामखिलंनिगद्य ॥ पृष्टश्चतैराहनिजंहृदिस्थंबौद्धागमार्थंसृतिबंधमोचनं
॥ १५३ ॥ क्षणादयःक्षणिकास्तद्विशेषायतःप्रयांत्येवनिसर्गतोखिलाः ॥ ततःस्थिरत्वेपिविशेषसंश्रयादु
क्तंक्षणस्थायिमयासमस्तं ॥१५४॥ तद्वान्विशेषश्चयतोनभिन्नौसदास्वनिर्वाहकशक्तियुक्तौ ॥ अतःक्षण
स्थायिसमस्तमेतत्स्थिरात्मकंचेतिहिनास्तिभेदः ॥ १५५ ॥ ज्ञोहंसदैकःपरमोमयैतत्सदाऽननीयंचयतोस्व
तंत्रं ॥ ज्ञानात्मकंविश्वमतोमयोक्तंजडस्वरूपंचकिमुस्वचेतनं ॥ १५६ ॥ शंशीलकोहंयतएवचोच्चःशूना
मकस्तद्धिमयानिधेयं ॥ शून्याभिधंदोषविरुद्धरूपोदोषोज्झितोन्यस्त्वखिलादनामा ॥ १५७ ॥ एनै
वसाद्यंत्वसदेवनामतत्स्वभावएनैवभवेद्यतस्तत् ॥ इत्यादिबोद्धव्यमिदंसमस्तंमयोदितंक्वापिनहेयमस्ति ॥११७१॥
॥ १५८ ॥ इत्यादिदेवान्प्रतिबोधयंश्चदेवैःसहोवाससबुद्धदेवः ॥ गत्वास्वधामाप्यपरेणरूपेणास्तेपृथक्कैक

तनुर्यथेष्टं ॥ १५९ ॥ ततस्तुबुद्धोदितपक्षसंस्थोजिनोपिचक्रेमतमन्यदेव ॥ बौद्धेनजैनेनमतेनचैवंदैत्यांश
काःप्रीतिमगुःसमस्ताः ॥ १६० ॥ प्रशांतविद्येत्यभिधंतथान्यद्बुद्धोक्तशास्त्रंत्रिदशाअवाप्य ॥ तोषंययुर्वेदस
मस्तसारंयामाश्रितानामचिरेणमुक्तिः ॥ १६१ ॥ अन्येमनुष्याअपिभारताद्यंसतसंप्रदायंपरिगृह्यविष्णुं ॥
यजंतआपुःपर मांगतिंतन्नसेहिरेक्रोधवशादिदैत्याः ॥ १६२ ॥ शैवंतपस्तेविपुलंविधाय जगद्विमोहोर्जितश
क्तिमस्मात् ॥ प्राप्यप्रजाताभुविमोहनंचचक्रुःकुतर्कैरभिधांवदंतः ॥ १६३ ॥ तेषांप्रपातायसतांविमुक्त्यैज
न्मासभीमस्ययदुक्तमत्र ॥ दुर्गापुनर्विप्रकुलेवतीर्णाहनिष्यतिव्रातमथासुराणां ॥ १६४ ॥ ततःकलेरंतमवा
प्यधर्मज्ञानादिकल्याणगुणप्रहीने ॥ लोकेविरिंचत्रिपुरघ्नशक्रपूर्वाःपयोब्धित्रिदशाःप्रजग्मुः ॥ १६५ ॥
नारायणस्तैस्तुतिपूर्वमर्थितोभवायलोकस्यसशंफलाख्ये॥ ग्रामेमुनेर्विष्णुयशोभिधस्यगृहेबभूवाविरचिंत्यश
क्तिः ॥ १६६ ॥ कलेस्तुकात्कारतएवकल्कीज्ञानंकलंकंसुखमेवतद्वान् ॥ कल्कीतिवातेनसमस्तदस्युविना
शनंतेनदिनाद्यधायि ॥ १६७ ॥ अधर्मवृत्तंविमुखंहरेश्चनिहत्यनिःशेषजनंतुरंगी ॥ संस्थापयामाससधर्म
केतुंज्ञानंस्वभक्तिंचनिजप्रजासु ॥ १६८ ॥ इत्याद्यनंतानिहरेरुदारकर्माणिरूपाणिचसद्गुणाश्च ॥ नित्यव्यपे

ताखिलदोषकस्यब्रह्मेत्यनंतेतिचनामयेन ॥ १६९ ॥ आनंदतीर्थाख्यमुनिःसुपूर्णप्रज्ञाभिधोग्रंथमिमंचका
र ॥ नारायणेनाभिहितोबदर्यांतस्यैवशिष्योजगदेकभर्तुः ॥ १७० ॥ यस्तत्प्रसादादखिलांश्चवेदान्सपंच
रात्रान्सरहस्यसंग्रहान् ॥ वेदेतिहासांश्चपुराणयुक्तान्यथावदन्याअपिसर्वविद्याः ॥ १७१ ॥ समस्तशास्त्रार्थ
विनिर्णयोयंविशेषतोभारतवर्त्मचारी ॥ ग्रंथःकृतोयंजगतांजनित्रंहरिंगुरुंप्रीणयतामुनैव ॥ १७२ ॥ विनि
र्णयोनास्त्यमुनाविनायद्विप्रस्थितानामिहसर्ववाचां ॥ तद्ब्रह्मसूत्राणिचकारकृष्णोव्याख्यातथैषामयथाकृता
न्यैः ॥ १७३ ॥ निगूहितंयत्पुरुषोत्तमत्वंसूत्रोक्तमप्यत्रमहाऽसुरेंद्रैः ॥ जीवेश्वरैक्यंप्रवदद्भिरुग्रैर्व्याख्यायसू
त्राणिचकारचाविः ॥ १७४ ॥ व्यासाज्ञयाभाष्यवरंविधायपृथक्पृथक्चोपनिषत्सुभाष्यं ॥ कृत्वाखिलान्यं
पुरुषोत्तमंचहरिंवदंतीतिसमर्थयित्वा ॥१७५॥ तनुस्तृतीयापवनस्यसेयंसद्भारतार्थप्रतिपादनाय ॥ ग्रंथंच
कारेममुदीर्णविद्यायस्मिन्रमंतेहरिपादभक्ताः ॥ १७६ ॥ तृतीयमस्यवृषभस्यदोहसेदशप्रमतिंजनयंतयोष
णः ॥ १७७ ॥ निर्यदींबुध्नान्महिषस्यवर्पसईशानासःशवसाक्रंतसूरयः ॥ यदीमनुप्रदिवोमध्वआधवेगुहा
संतंमातरिश्वामथायति ॥ १७८ ॥ इत्यादिवाक्योक्तमिदंसमस्तंतथापुराणेषुचपंचरात्रे ॥ अत्रोदितायाश्च

कथाःसमस्तावेदेतिहासादिविनिर्णयोक्ताः ॥ १७९ ॥ तस्मादयंग्रंथवरोखिलानांधर्मादिमोक्षांतपुमर्थहेतुः ॥
किंचोदितैरस्यगुणैस्ततोन्यैर्नारायणःप्रीतिमुपैत्यतोलं ॥ १८० ॥ यस्यत्रीण्युदितानिवेदवचनेरूपाणिदि
व्यान्यलंबट्तद्दर्शतमित्थमेवनिहितंदेवस्यभर्गोमहत् ॥ वायोरामवचोनयंप्रथमकंपृक्षोद्वितीयंवपुर्मध्वोयत्तु
तृतीयमेतदमुनाग्रंथःकृतःकेशवे ॥ १८१ ॥ यःसर्वगुणसंपूर्णःसर्वदोषविवर्जितः ॥ प्रीयतांप्रीतएवालं
विष्णुर्मेपरमःसुहृत् ॥ १८२ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमन्महाभारततात्पर्यनिर्णये
पांडवस्वर्गारोहणंनामद्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ छ ॥ ॥



श्रीमद्धनुमद्भीमसध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ ॐ॥ समिच्चर्वाज्यकान्हुत्वास
म्यक्पुरुषसूक्ततः॥सर्वेषामभयंदत्वाविरक्तःप्रव्रजेद्धरिं॥१॥(श्रुत्वा)स्मृत्वाभागवतंशुद्धमाचार्यंशरणंव्रजेत्॥
अधीहिभगवोब्रह्मेत्यस्मैब्रूयाद्गुरुःपरं ॥ २ ॥ उच्चारयेत्त्रिशस्तारंदक्षिणेश्रवणेतथा ॥ ऋषिच्छंदोदैवतानिब्रू
यात्तस्यक्रमात्सुधीः ॥ ३ ॥ अंतर्यामीतिगायत्रीपरमात्मेत्यनुक्रमात् ॥ विश्वश्चतैजसःप्राज्ञस्तुर्यश्चाक्षरदेव
ताः ॥ ४ ॥ कृष्णोरामोनृसिंहश्चवराहोविष्णुरेवच ॥ परंज्योतिःपरंब्रह्मवासुदेवइतिक्रमात् ॥ ५ ॥ अ
कारादेस्तथाशांतातिशांतांतस्यदेवताः ॥ एवमुक्त्वातुतद्ध्यानंब्रूयाद्भक्तायसद्गुरुः ॥ ६ ॥ अष्टपत्रेतुहृत्पद्मे
मध्येसूर्येंदुवह्निगं ॥ पीठंतत्पद्ममध्यस्थंनारायणमनामयं ॥ ७ ॥ उद्यदादित्यसंकाशंतेजसाऽनुपमंसदा ॥
सहस्रेणापिसूर्याणांसज्ज्ञानानंदरूपिणं ॥ ८ ॥ अतिरक्ततलंभास्वन्नखव्रातविभूषितं ॥ वृत्तजंघंवृत्तजानुंह
स्तिहस्तोरुमीश्वरं ॥ ९ ॥ महाकटितटाबद्धकांचीपीतांबरोज्वलं ॥ सुनिम्ननाभित्रिवलिंसुवृत्तोदरबंधनं
॥१०॥ विशाळवक्षसंभ्राजत्कौस्तुभामुक्तकंधरं ॥ वनमालाधरंहारवैजयंत्यादिभिर्युतं ॥ ११ ॥ पृथुदीर्घ
चतुर्बाहुंचक्रशंखगदांबुजैः ॥ युक्तमुन्निद्रपद्माक्षंस्फुरन्मकरकुंडलं ॥ १२ ॥ पूर्णचंद्रायुतोद्रिक्तकांतिमन्मु

खपंकजं ॥ सुभ्रुवंसुललाटांतंकिरीटाबद्धमूर्धजं ॥ १३ ॥ निःशेषदुःखदमनंनित्यानंदंशुचिस्मितं ॥ विश्वा
दींश्चैवकृष्णादीनेवंभूतान्सनातनान् ॥ १४ ॥ अभिन्नानेवसततंतस्माद्विष्णोःपरात्मनः ॥ वराभयोद्यतक
रान्नित्यानंदैकरूपिणः ॥ १५ ॥ एवमुक्त्वागुरुर्ध्यानंशपथंकारयेत्ततः ॥ नविष्णुंवैष्णवांश्चैवविसृजेयमिति
त्रिशः ॥१६॥ नचान्यदेवतासाम्यंतदैक्यमथवाहरेः ॥ चिंतयेयंस्मृतौवापिनचाप्येकत्ववादिभिः ॥ १७ ॥
समत्ववादिभिर्वाहंसंगच्छेयंकदाचन ॥ तन्निंदकैश्चतद्भक्तनिंदकैर्वामहामुने ॥ १८ ॥ एवंकृतेतुशपथेमस्त
केहस्तपंकजं ॥ निधायोत्तीर्यसंसारात्सुखीभवहरेःप्रियः ॥१९॥ सर्वदुःखादिभिर्मुक्तोनित्यानंदैकरूपकः ॥
संप्राप्यविष्णुसामीप्यंतत्रापिहरिभक्तिमान् ॥ २० ॥ भक्तिमांश्चान्यदेवेषुतारतम्यंचसंस्मरन् ॥ सर्वोत्कर्षं
स्मरन्विष्णोर्भूयाश्चैवसदासुखी ॥ २१ ॥ नमुक्तौविष्णुनैक्यंवामुक्तानांसाम्यमेववा ॥ स्मरेथाइतिचोक्त्वा
थसमयाननुशिक्षयेत् ॥२२॥ नित्यशश्चहरेःपूजाजपध्यानसमर्पणं ॥ कर्तव्यंतुत्वयावत्सजपश्चत्रिसहस्रकः
॥ २३ ॥ मध्यमःप्रणवस्योक्तोयोवरःससहस्रकः ॥ त्रिसहस्रात्परोयस्तुसउत्तमजपःस्मृतः ॥ २४ ॥ आत्मा
नंप्रतिबिंबत्वेध्यायन्बिंबंजनार्दनं ॥ ध्यायस्वसततंवत्ससपर्यांनित्यशःकुरु ॥२५॥ मानसैर्वाथपुष्पैर्वाप्रण

कृष्ण वेनसमाहितः ॥ अन्यांश्चवैष्णवान्मंत्राञ्जपेथाभक्तिपूर्वकं ॥२६॥ शृणुष्ववैष्णवंशास्त्रंसदावेदार्थतत्परः ॥ स्तुतिः
॥ २ ॥ वेदान्मंत्रानुपनिषत्सहितान्सर्वदाशृणु ॥ २७ ॥ इतिहासपुराणंचपंचरात्रंतथैवच ॥ तदर्थान्ब्रह्मसूत्रैश्चस
म्यङ्निर्णीयतत्त्वतः ॥ २८ ॥ विष्णोःसर्वोत्तमत्वंचसर्वदाप्रतिपादय ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचा
र्यविरचितोयतिप्रणवकल्पःसंपूर्णः ॥ ॥ ॥ ॥
श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः॥ॐ॥ रोहिण्यामर्धरात्रेतुयदाका
लाष्टमीभवेत् ॥ जयंतीनामसाप्रोक्तासर्वपापप्रणाशनी ॥ यस्यांजातोहरिःसाक्षान्निशीथेभगवानजः॥ त
स्मात्तद्दिनमत्यंतंपुण्यंपापहरंपरं ॥ तस्मात्सर्वैरुपोष्यासाजयंतीनामवैसदा ॥ द्विजातिभिर्विशेषेणतद्भक्तैश्च
विशेषतः ॥ योभुंक्तेतद्दिनेमोहात्पूयशोणितमत्तिसः ॥ तस्मादुपवसेत्पुण्यंतद्दिनंश्रद्धयान्वितः॥कृत्वाशौ
चंयथान्यायंस्नानंकुर्यादतंद्रितः ॥ प्रभातकालेमेधावीयोगायेतियथाविधि ॥ नित्याह्निकंप्रकुर्वीतभगवंत
मनुस्मरन्॥(योगाययोगपतयेयोगेश्वराययोगसंभवायश्रीगोविंदायनमोनमः)॥ मध्याह्नकालेचपुमान्सायं ॥११७४॥
कालेत्वतंद्रितः॥ स्नायीतपूर्वमंत्रेणवासुदेवमनुस्मरन्॥ ततःपूजांप्रकुर्वीतविधिवत्सुसमाहितः॥ यज्ञायेति

चमंत्रेणश्रद्धाभक्तियुतःपुमान् ॥ कृष्णंचबलभद्रंचवसुदेवंचदेवकीं ॥ नंदगोपंयशोदांचसुभद्रांतत्रपूजयेत्॥
अर्घ्यंदत्वासमभ्यर्च्याभ्युत्थितेशशिमंडले॥ जातःकंसवधार्थायभूभारोत्तारणायच॥ कौरवाणांविनाशाय
दैत्यानांनिधनायच ॥ पांडवानांहितार्थायधर्मसंस्थापनायच ॥ गृहाणार्घ्यंमयादत्तंदेवक्यासहितोहरे ॥
क्षीरोदार्णवसंभूतअत्रिगोत्रसमुद्भव॥ गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् ॥ दत्वार्घ्यंमनुनानेनह्यु
पस्थायविधुंबुधः ॥ शशिनेचंद्रदेवायसोमदेवायचेंदवे ॥ मृगिणेशीतबिंबायलोकदीपायदीपिने ॥ शी
तदीधितिबिंबायतारकापतयेनमः ॥ उपसंहृत्यतत्सर्वंब्रह्मचारीजितेंद्रियः॥ विश्वायेतिचमंत्रेणततःस्वापंस
माचरेत् ॥ ततोनित्याह्निकंकृत्वाशक्तितोदीयतांधनं ॥ सर्वायेतिचमंत्रेणततःपारणमाचरेत् ॥ धर्मायेति
ततःस्वस्थोमुच्यतेसर्वकिल्बिषैः ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितोजयंतीनिर्णयःसंपूर्णः ॥
श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः॥ॐ॥ अंबरगंगाचुंबितपादःपद
तलविदलितगुरुतरशकटः ॥ कालियनागक्ष्वेलनिहंतासरसिजनवदलविकसितनयनः॥ १॥कालघना

लीकर्बुरकायःशरशतशकलितसुररिपुनिवहः ॥ संततमस्मान्पातुमुरारिःसततगसमजवखगपतिनिरतः
॥ २ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचिताकृष्णस्तुतिःसंपूर्णा ॥ ॥ ॥
बिल्वमंगलःसाधुः ॥ श्रीकृष्णार्पणमस्तु ॥ सर्वमूलंसंपूर्णम् ॥

अयं ग्रंथः मुंबय्यां तुकाराम जावजीनाम्नां निर्णयसागराख्यमुद्रणालये कुंभघोणस्थाभ्यां टोणपे रामाचार्यपुत्राभ्यां कृष्णाचार्य—व्यासाचार्याभ्यां बा० रा० घाणेकरद्वारा मुद्रयित्वा प्रकाशितः । शके १८२२.

Published by T. R. Krishnacharya, Madhvavilas Book-depot, Kumbhakonam.

Printed by B. R. Ghanekar at the Nirnay-sagar Press, 23, Kolbhat lane, Kalbadevi Road, Bombay.

The Credit of getting the Sarvamoola Books Scanned goes to Panditavareenya ityaadi birudankita Shreemajjaalihaala Shreenivaasaachaaryasya Vidyaa Suta, "Gomanjari" Udgrantha kartru, (Raghunatha suri virachita Manikya manjari granthasya Khandana Grantha) Veda Shaastra Puraanaartha Vishaarada, Panditavareenya Shree Dwarakaanaathaachaaryaru. My heartful salute for him to provide me such a wonderful opportunity to work on this project.

Project Started on : 21 December 2009
Project Completed on : 20 March 2011

Scanned By : Aravindacharya Haranahalli, aravindbharadwajhs@gmail.com

| Kramasankhya | Grantha | Pan From (An = Ananka) | Pan Untill (An = Ananka) | Pan with Problem |
|---|---|---|---|---|
| | Geetha | 1 | 30 | |
| 1 | Shreemad Geetaabhaashya | 31 | 81 | |
| 2 | Shreemad Bramhasootrabhaashya | 83 | 158 | |
| 3 | Shreemad Bramhasootraanubhaashya | 159 | 160 | |
| 4 | Shreemadanuvyaakhyaana | 161 | 234 | |
| 5 | Shreemad Pramaanalakshana | 234 | 237 An | |
| 6 | Shreemat Kathaalakshana | 237 | 238 An | |
| 7 | Upaadhikhandana | 238 | 239 An | |
| 8 | Maayaavaadakhandana | 239 An | 239 | |
| 9 | Prapanchamithyatvaanumaanakhandana | 240An | 240An | |
| 10 | Tatvasankhyanam | 240 | 240 | |
| 11 | Tatvaviveeka | 241 An | 241 An | |
| 12 | Tatvoodhyoota | 241 | 245 | |
| 13 | Rigvedabramhanachaturthapanchakaayaamchaturthakhandaha | 246 | 247 | |
| | Karmanirnaya | 248 | 258 An | |
| 14 | Shreemadvishnutatvavinirnaya | 258 | 277 | |
| | Rigbhashya Moola Samhita- Padapaathasahita | 278 | 316 | |
| 15 | Rigbhashya | 317 | 352 | |
| 16 | Dashoopanishad - Aiytareeyoopanishatbhaashya | 353 | 422 | 367/68 |
| | Brihadaaranyakoopanishad | 423 | 466 | |
| 17 | Brihadaaranyakoopanishad Bhashya | 467 | 534 | |
| | Chandoogyoopanishad | 535 | 574 | |
| 18 | Chandoogyoopanishad Bhaashya | 575 | 620 | |
| | Taittareeyoopanishad | 621 | 627 | |
| 19 | Taittareeyoopanishad Bhashya | 628 | 637 | |
| | Eeshaavaasyoopanishad | 638 | 639 An | |
| 20 | Eeshaavaasyoopanishad Bhashya | 639 An | 641 | |

| Kramasankhya | Grantha | Pan From (An = Ananka) | Pan Untill (An = Ananka) | Pan with Problem |
| --- | --- | --- | --- | --- |
| 21 | Kaathakoopanishad | 642 | 647 | |
| | Kaathakoopanishad Bhaashya | 648 | 653 | |
| 22 | Atharvanoopanishad | 654 | 657 | |
| | Atharvanoopanishad Bhashya | 658 | 662 | |
| 23 | Maandookyoopanishad | 663 | 665 An | |
| | Maandookyoopanishad Bhashya | 665 An | 670 | |
| 24 | Shatprashnoopanishat | 671 | 675 An | |
| | Shatprashnoopanishat Bhaashya | 675 An | 676 | |
| 25 | Talavakaaroopanishad | 677 | 678 | |
| | Talavakaaroopanishad Bhashya | 678 | 680 | |
| 26 | Geethataatparyanirnaya | 681 | 726 | |
| 27 | Shreemannyaayavivaranam | 727 | 746 | |
| 28 | Naarasimha Nakhastuti | 747 An | 747 An | |
| 29 | Yamaka Bhaaratam | 747 An | 750 | |
| 30 | Dwaadashastootram | 751 | 757 | |
| 31 | Krishnaamrutamahaarnava | 758 | 767 | |
| 32 | Tantrasaarasangraha | 768 | 785 | |
| 33 | Sadaachaarasmruthi | 786 | 787 | |
| 34 | Shreemadbhaagavata Taatparyanirnaya | 788 | 927 | |
| 35 | Shremanmahaabhaarata Taatparyanirnaya | 928 | 1172 An | |
| 35 | Yatipranavakalpa | 1173 An | 1174 | |
| 35 | Krishnastuti | 1174 | 1175 | |